अपने प्यारे चहेतें के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

चन्दे की दरें (वार्षिक)

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 129.00 वायु सेवा से रु. 276.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,
पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 135.00 वायु सेवा से रु. 276.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.



# चन्दमामा

जून् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा




संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## सर्वेभ्यः शिक्षणम्

भारते जून्-जुलै-मासयोः सर्वासु विद्यालयेषु नूतनशैक्षणिकवर्षस्य आरम्भः भवति । किन्तु बहुषु विद्यालयेषु ग्रीष्मविरामस्य आरम्भात् पूर्वम् एव प्रवेशावकाशः स्थगितः भवति । एतयोः मासयोः नूतनानां प्रवेशावकाशः अत्यल्पः एव भवति । एवं स्थिते कोटिशः बालाः विद्यालये अतिष्ठन्तः आलस्येन गृहे तिष्ठन्तः यन्त्रागारोपाहारगृहादिषु धनार्थं कार्यं कुर्वाणाः वा यदि दृश्यन्ते तर्हि किम् आश्चर्यम् ?

'सर्वेभ्यः शिक्षणम्' इत्येतत् वाक्यं मुद्रितसाहित्ये विषयपरिणतानां सभासु वा दृश्यते । समाजसेवकाः, मानवाधिकाररक्षकाः, अन्ये च सभाप्रकोष्ठे उपविश्य एतस्य वाक्यस्य आशयः कथं व्यवहारपथे आनेतव्यः इति चिन्तयन्तः दृश्यन्ते ।

किन्तु इदानीं देशे तादृशी स्थितिः अस्ति यत् स्वातन्त्र्यप्राप्तेः पञ्चाशद्वर्षाणाम् अनन्तरम् इदानीं वयम् 'ऊनचतुर्दशवर्षीयाणां शिक्षणम् अनिवार्यं निश्शुल्कं च स्यात्' इति निर्णयं कृत्वा तम् अंशं संविधाने योजयन्तः स्मः ।

संविधानाङ्गभूतः एषः अंशः कथं कार्यान्वितः न जातः ? तत्र किं वा कारणम् ? सन्ति कानिचन कारणानि । मातापित्रोः आयस्य वर्धनार्थं बालैः साहाय्यं करणीयं भवति क्वचित् । पुनः क्वचित् वासार्थं गृहं, धर्तुं वस्त्राणि, सेवितुम् आहारः वा न भवति । दारिद्र्येण सहैव जन्म प्राप्य दारिद्र्येण सहैव मरणं प्राप्तव्यं भवति ।

अतः यावत् तादृशः परिसरः निर्मितः न भवति, यत्र बालैः अनन्यगत्या उद्योगः आश्रयणीयः न भवति, यत्र आरोग्यस्य आवश्यकताः पूरिताः भवन्ति, यत्र च बुभुक्षा तेषां बाधायै न भवति, तावत् 'सर्वेभ्यः शिक्षणम्' इति वचनं सौहार्दचिन्तनात् उद्धृतं वचनमात्रम् एव तिष्ठति, न तु किञ्चित्करम् ।

सम्पुटः - १४ जून् - १९९७ सञ्चिका - ३

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गणम् - courtyard
अनुच्छेदः - para
असमर्थः - unabled
आदाय - having picked up
आवृणोति - it envelops
आशासे - I hope
ओष्ठः - lip
खेटकः - shield
ताडग्रन्थः - book written on palm/tada leaves
निखातः - being dug
नूनम् - certainly
नौका - a boat/ship
नौकास्थानम् - port
पक्षिधाम - birds sanctuary
पुनरावृत्तम् - revised
पुन्नागः - the tree terminaia tomentosa terminalia
प्रकाण्डः - stem
प्रत्यग्रता - freshness
प्रसुवते - (they) give birth to
प्लवः - a float/a raft
मल्लः - professional wrestler
महानौका - ship
मासाभ्यन्तरे - within a month
यामः - 1/8 part of a day
लवित्रम् - a sickle
लिम्पति - to apply (as mud to wall)
रिक्तहस्तः - empty-handed
विनिमयः - exchange
विप्लवः - revolt
विभक्तवान् - one who has divided
विलासिजीवनम् - luxurious life
विहस्य - having smiled
वीथिका - street
व्यवहारः - transaction
सन्तृप्तः - satisfied
सन्नाहः - preparation
स्नात्वा - having taken bath
ह्रदः - a pool

वार्ताविशेषः -

# प्राचीनमित्राणां नूतनः सहकारयत्नः

कश्चन देशः अन्यदेशस्य उत्तमस्नेहं यदि सम्पादयति, यदि तौ परस्परसहकारेण जीवतः तर्हि प्रत्यक्षतया परोक्षतया वा विश्वमाङ्गल्यं सिद्धं भवति। अतः एव बहवः देशाः विविधानाम् उद्देशानां निमित्तं वाणिज्यादिव्यवहारवृद्ध्यर्थं वा सहकारसंस्थाम् आरचयन्तः दृश्यन्ते । एतया दृष्ट्या हिन्दुमहासागरस्य समीपवर्तिदेशैः सम्भूय रचिता 'इण्डियन् ओषन् रिम् असोसियेषन्' इत्येषा सहकारसंस्था निश्चयेन उल्लेखार्हा अस्ति । दक्षिणाफ्रिका, मडगास्कर्, मारिषस्, मुजाम्बिक्, बाञ्जानिया, केन्या, एमन्, ओमन्, भारतम्, श्रीलङ्का, मलेषिया, सिङ्गपुरम्, इण्डोनेषिया, आष्ट्रेलिया इत्येते चतुर्दश देशाः तस्याः संस्थायाः सदस्याः सन्ति ।

चतुर्भ्यः वर्षेभ्यः पूर्वम् अस्मद्देशम् आगतः दक्षिणाफ्रिकायाः विदेशव्यवहारमन्त्री पिक्बो-थावर्यः ऐदम्प्राथम्येन हिन्दुमहासागर-तटवर्तिदेशानां सहकारस्य प्रस्तावं कृतवान् । १९९५ तमे वर्षे मारिषस्देशेन कृतस्य प्रयत्नस्य परिणामतः आष्ट्रेलिया, भारतम्, केन्या, मारिषस्, ओमन्, सिङ्गपुरम्, दक्षिणाफ्रिका - इत्येषां सप्तदेशानां सहकारसंस्था उदिता । अनन्तरकाले अन्ये सप्त देशाः एतस्याः सदस्याः जाताः ।

मारिषस्देशस्य राजधान्यां प्रोर्ट्लुयीनगरे मार्च्मासस्य ५ दिनाङ्के चतुर्दशानाम् अपि देशानां विदेशीयवाणिज्यसचिवाः सम्भूय एतस्याः सहकारसंस्थायाः स्वरूप-विधि-विधानादिकं निर्णीतवन्तः । सदस्यदेशानां मध्ये परस्परोपकारकाणि कार्याणि, सहकारभावः च वर्धनीयः इत्यस्ति एतस्याः उद्देशः । परस्परप्रयोजनस्य वृद्ध्यर्थम् आर्थिकसहकारः एव प्रमुखः भवति इति तस्यां सभायां निर्णीतम् ।

परस्पर-वाणिज्य-सौकर्य-व्यवस्थापनम्, आधुनिक-वैज्ञानिक-तान्त्रिकज्ञानस्य परस्पर-विनिमयः, मानवसम्पन्मूलस्य अभिवृद्धिः, प्रवासयोजनानाम् आधिक्येन उपकल्पनम् इत्यादयः दशाधिकाः कार्यक्रमाः तया संस्थया कर्तव्यत्वेन चिताः सन्ति । एतस्याः संस्थायाः प्रधानकार्यालयः मारिषस्देशे अस्ति । ततः एव सर्वे व्यवहाराः प्रचलन्ति ।

सहकारप्रवृत्तेः लाभं प्राप्तुम् इच्छन्तः अन्ये अपि बहवः देशाः एतस्याः संस्थायाः सदस्यतां प्राप्तुम् अपेक्षां प्रकटितवन्तः सन्ति। सदस्यदेशानां सङ्ख्या न्यूना अस्ति चेदेव सुव्यवस्थिततया कार्यनिर्वहणार्थं, संस्थायाः शक्तिं वर्धयितुं च सौलभ्यं भवति इति पोर्ट्लूयीनगरे प्रवृत्तायां सभायां भारतेन सूचितम् अस्ति । एतस्मिन् अधिवेशने भागं गृहीतवान् ऐ.के. गुज्राल्वर्यः - ''प्राचीनकालात् अपि हिन्दुसागर-तटवर्तिदेशानां मध्ये समुद्रमार्गः आसीत् एव । किन्तु मध्यकाले विदेशीयानां शासनस्य कारणतः एषः सम्बन्धः छिन्नः जातः । इदानीं तैः मित्रैः, वाणिज्योद्यमरतैः च सा प्राचीना मैत्री उज्जीव्यमाना अस्ति'' इति उक्तवान् ।





# उत्तमकाव्यम्

चैत्रालयराज्यं कनकसेनः नाम राजा पालयति स्म । कनकसेनः स्वयं कविः आसीत् । सः आस्थाने स्थितानां कवीनां, पण्डितानां च विषये विशेषादरं प्रकटयति स्म ।

तस्य आस्थानकविः नरसिंहशर्मा श्रेष्ठपण्डितः आसीत् । अनेकानि काव्यानि विलिख्य महाराजस्य गौरवपात्रम् आसीत् सः ।

कस्मिंश्चित् दिने यदा पण्डितसभायाः कार्यकलापः समाप्तः तदा महाराजः नरसिंहशर्माणं पश्यन् पृष्टवान् - ''कविवर्य ! गतेषु षट्सु मासेषु भवता नूतनकाव्यं न रचितम् । किमर्थम् एवम् ?'' इति ।

क्षणकालस्य मौनस्य अनन्तरम् उक्तवान् नरसिंहशर्मा - ''प्रभो ! एकत्र वार्धक्यं बाधते । अपरत्र लेखने इच्छा अपि दिने दिने क्षीयमाणा अस्ति । अतः काव्यलेखनं किमपि न जातम्'' इति ।

राजा किञ्चित्कालानन्तरम् उक्तवान् - ''भवता क्रियमाणं नूतनकाव्यवाचनं मया न श्रूयते चेत् लोकः एव शून्यः निस्सारः च इति भासते । नरसिंहशर्मन् ! अग्रिममासे एव युगादिपर्व खलु ? तस्मिन् दिने श्रेष्ठम् एकं काव्यं विलिख्य तत् सभायां पठनीयं भवता । रसमाधुर्येण सभा रोमाञ्चिता यथा भवेत् तथा करणीयम् । एषः मम अभिलाषः'' इति ।

नरसिंहशर्मा दीर्घं निश्श्वस्य उक्तवान् - ''प्रभो ! यथा कोकिलः वसन्तऋतौ एव कूजति, मयूरः वर्षाऋतौ एव यथा नृत्यति, कमलं सूर्यकिरणस्पर्शात् एव यथा विकसति, नीलोत्पलं यथा रात्रौ चन्द्रस्य शीतलकिरणस्पर्शात् एव विकसति, तथा कवेः मनः यदा भावनिर्भरं सत् स्पन्दते तदा

'भामहः'

एव उत्तमकाव्यं निर्मितं भवति'' इति ।

तावति काले राजीवाक्षः नाम युवकविः स्वस्य आसनात् उत्थाय - ''प्रभो ! काव्यरचनार्थं स्पन्दनं स्फूर्तिः च आवश्यकम् इति तु सत्यम् एव । नरसिंहशर्मणा युक्तम् एव उक्तम् । परन्तु स्पन्दनं स्फूर्तिं च विना कवितासृष्टिरेव न भवति इत्यंशम् अहं न अङ्गीकरोमि । कवित्वं प्रकाशयितुम् अपेक्षितः परिसरः कविना स्वयमेव निर्मातव्यः । एषः मम अभिप्रायः । कविः स्वस्य असामर्थ्यम् अलसत्वं वा न अङ्गीकरोति । अतः सः स्फूर्तिः स्पन्दनं च आवश्यकम् इति वदति । पक्षिभिः पुष्पैः च सह मनुष्याणां तोलनं न युक्तम् । सुमहत् शिक्षणं दत्तं चेदपि पक्षिणः पुष्पाणि वा कवित्वं प्रदर्शयितुं न अर्हन्ति'' इति मन्दहासपूर्वकम् उक्तवान् । असूयापराः अन्ये कवयः राजीवाक्षस्य वचनानि श्रुत्वा करताडनं कृतवन्तः ।

परन्तु राजीवाक्षस्य वचनैः नरसिंहशर्मणः मुखं कोपेन अवमानेन च रक्तवर्णं जातम् । अनुक्षणं सः आसनात् उत्थाय - ''राजीवाक्ष ! कानिचन प्रणयगीतानि लिखितवान् भवान् उत्तमकवितायाः स्वरूपं कथं भवति इत्येव न जानाति । अत्युत्तमकविता कविहृदयात् उत्पद्यते, न तु मस्तिष्कतः'' इति उद्वेगमिश्रितस्वरेण उक्तवान् ।

राजीवाक्षः तु हसन् एव पुनः उक्तवान् - ''एवं तर्हि मस्तिष्कं नास्ति चेदपि हृदयम् अस्ति चेत् काव्यरचनं कर्तुं शक्यते इति सिद्धम्'' इति ।



अन्यकवयः सर्वे हसन्तः उपहासं कुर्वन्तः करताडनं कृतवन्तः । अन्यकविभिः कृतं व्यवहारं पश्यतः नरसिंहशर्मणः मनः नितरां खिन्नं जातम् । सः राजीवाक्षं कोपेन पश्यन् - ''एवं तर्हि मासाभ्यन्तरे एव एकं काव्यं रचयितुं शक्यते इति अभिप्रायः खलु भवतः ?'' इति पृष्टवान् ।

''आम् । मासाभ्यन्तरे निश्चयेन काव्यं रचयितुं शक्यते'' इति मन्दहासपूर्वकम् उक्तवान् राजीवाक्षः। तावत्पर्यन्तम् आसक्त्या शृण्वता स्थितेन महाराजेन उक्तं - ''कविश्रेष्ठौ ! भवतोः यः मया दत्तात् समयात् पूर्वं उत्तमकाव्यरचनां करोति, तस्मै विशेषपारितोषिकं दास्यामि । राजसभायां तस्य कनकाभिषेकं च



निर्वर्तयिष्यामि । अर्धासनदानेन तं विशेषतः पुरस्करिष्यामि च'' इति ।

उभाभ्याम् अपि कविभ्याम् एतत् विनयेन अङ्गीकृतम् । तद्दिने गृहम् आगतस्य पत्युः मुखदर्शनात् एव तस्य पत्नी सुशीला ज्ञातवती यत् पतिः यथापूर्वं प्रसन्नः नास्ति इति । यदा नरसिंहशर्मा भोजनार्थम् उपविष्टवान् तदापि किमपि चिन्तयति स्म । तस्य कर्णयोः राजीवाक्षेण उक्तानि वचनानि एव गुञ्जन्ति स्म । सुशीला तस्य समीपे उपविश्य प्रीत्या पृष्टवती - ''किं चिन्तयन् अस्ति भवान् ? सभायां महाराजेन किमपि उक्तं वा ?'' इति ।

तस्मिन् समये पार्श्वगृहतः प्रत्यागता नरसिंहशर्मणः पुत्री मातुः वचनानि श्रुत्वा हसन्ती - ''पितुः आशयं खण्डयितुं महाराजस्य अपि धैर्यं नास्ति । राजसभायां पिता यद् वदति सा एव कविता, सः यद् लिखति तदेव काव्यम् । एवं ननु तात !'' इति उक्तवती ।

नरसिंहशर्मा प्रीत्या पुत्रीं पश्यन् - ''पुत्रि ! भवत्या उक्तं युक्तम् एव आसीत् अद्यपर्यन्तम् । किन्तु अद्य स्थितिः तथा नास्ति । यतः अद्य राजीवाक्षः नाम युवकविः मया सह काव्यरचनास्पर्धार्थं स्थितवान् अस्ति'' इति वदन् तस्मिन् दिने प्रवृत्तं सर्वं विस्तरेण निरूपितवान् ।

राजीवाक्षस्य विचारं श्रुत्वा माधव्याः मुखं सन्तोषेण विकसितम् । पूर्वं सा यदा राजसभां गतवती आसीत् तदा तस्य आशुकाव्यं श्रुत्वा सन्तोषम् अनुभूतवती आसीत् । इदानीं तस्य नाम्नः श्रवणस्य अनन्तरं तस्याः नेत्रयोः पुरतः तदीयं सुन्दरं रूपं सकृत् आगत्य गतम् । किन्तु सः पितरम् एव स्पर्धार्थं निमन्त्रितवान् यत् तत् श्रुत्वा सा किञ्चिदिव कुपिता ।

सा हसन्ती एव पितरम् उक्तवती - ''राजीवाक्षः भवता सह स्पर्धां कर्तुम् इच्छति किम् ? पर्वतेन सह युद्धं क्रियते अजेन'' इति ।

एतत् श्रुतवतः नरसिंहशर्मणः किञ्चिदिव सन्तोषः जातः । सः विना वचनं भोजनं समाप्य उत्थितवान् । ततः ताडपत्राणि स्वीकृत्य काव्यरचनां आरब्धवान् च । मानवजीवनस्य कांश्चित् अंशान् स्वीकृत्य, प्रकृत्या सह तोलयन् सः काव्यरचनाम् अनुवर्तितवान् । प्रातःकालं बाल्यावस्थया, मध्याह्नं यौवनावस्थया, रात्रिं

वार्धक्यावस्थया च तोलयन् सः अपूर्वशैल्या प्रकृतिं वर्णयन् काव्यं रचितवान् । तस्य ''जीवनचक्रम्'' इति शिरोनाम दत्तवान् ।

अहर्निशं परिश्रमं कृत्वा निश्चितसमये एव नरसिंहशर्मा काव्यं लिखितवान् । तेन बहुधा सन्तोषम् अनुभूतवान् सः । युगादिपर्वदिने नरसिंहशर्मा पत्न्या पुत्र्या च सह राजसभां प्रविष्टवान् । तस्मात् पूर्वमेव राजीवाक्षः कविभिः सह सभायाम् उपविष्टवान् आसीत् । राजीवाक्षः माधवीं दृष्ट्वा हसितवान् । सा अपि तं दृष्ट्वा मन्दहासं प्रकटितवती । तावति काले महाराजः सभां प्रविष्टवान् । सर्वे आसनात् उत्थाय गौरवं सूचितवन्तः ।



महाराजः सभां दृष्ट्वा - ''अद्य युगादिपर्व खलु ? अधुना नरसिंहशर्मा राजीवाक्षः च नूतनसंवत्सरस्य शुभाशयं वदन्तौ स्वस्य काव्यस्य वाचनेन अस्मान् सन्तोषयतः'' इति उक्त्वा सिंहासने उपविष्टवान् ।

नरसिंहशर्मा उत्तमरीत्या काव्यस्य गानम् आरब्धवान् । सः एकैकं पद्यम् अपि भावनापूर्णतया गायति स्म । सर्वे मन्त्रमुग्धतया शृण्वन्ति स्म । यदा काव्यवाचनं समाप्तं तदा सर्वे महता सन्तोषेण करताडनं कृतवन्तः ।

अनन्तरं राजीवाक्षस्य पर्यायः आगतः । सः स्यूते विद्यमानं ताडपत्रबन्धं स्वीकृत्य महाराजाय अर्पितवान् । तत्र एकमपि अक्षरं न आसीत् । एतत् दृष्ट्वा राजा कोपेन राजीवाक्षं पृष्टवान् - ''एतदेव भवता रचितं किम् ?'' इति ।

राजीवाक्षः मौनेन मन्दहासं प्रकटयन् स्थितवान् । राजा किञ्चित्कालानन्तरं किमपि स्मृत्वा राजीवाक्षम् अभिमानेन पश्यन् - ''नरसिंहशर्माणम् अपूर्वकाव्यस्य निर्माणे प्रवर्तितवान् भवान् निश्चयेन श्लाघ्यः एव'' इति उक्तवान् ।

तदा पार्श्वे स्थितः मन्त्री - ''प्रभो ! नरसिंहशर्मणः काव्यस्य निर्माणे एषः कथं प्रवर्तकः जातः ? मया तु किमपि न ज्ञातम्'' इति आश्चर्येण उक्तवान् ।

एतत् श्रुत्वा महाराजः हसन् उक्तवान् - ''यद्यपि राजीवाक्षः स्वस्य कवितायाः सामर्थ्यं जानाति स्म एव, तथापि सः श्रेष्ठकविभिः सह स्पर्धां किमर्थम् अकरोत् इति किं ज्ञायते ? नरसिंहशर्मणः कवितासरस्वतीं जागरयितुम् एव एषः तथा

व्यवहृतवान् । स्पर्धाकारणतः नरसिंहशर्मणि काव्यरचनास्फूर्तिः उद्गता । ततः अपूर्वं काव्यं निर्मितम् अभवत् । अतः एव वयम् अद्य अपूर्वं काव्यम् आस्वादयितुम् अवकाशं प्राप्तवन्तः'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् नरसिंहशर्मा राजीवाक्षस्य समीपं गत्वा - ''राजीवाक्ष ! भवद्विषये मया अन्यथाभावः प्राप्तः आसीत् । कृपया क्षन्तव्यः अहम्'' इति उक्तवान् ।

''भवद्द्वारा उत्तमकाव्यं लेखयितव्यम् इति उद्देशेन सभायां मया कठिनवचनानि उक्तानि । अतः क्षमायाचना मया करणीया, न तु भवता'' इति उक्तवान् राजीवाक्षः विनयेन ।

अनन्तरं राजा महता वैभवेन नरसिंहशर्माणं सत्कृत्य कनकाभिषेकं निर्वर्तितवान् । अर्धासनदानेन अपि तं पुरस्कृतवान् सः ।

राजीवाक्षस्य माधव्याः च कटाक्षवीक्षण-मन्दहासादिकं लक्षितवान् महाराजः सत्कारकार्यक्रमस्य अनन्तरम् उक्तवान् - ''कविवर्य ! एतस्मिन् शुभसन्दर्भे अन्यदेकं शुभकार्यं निश्चीयते चेत् वरम् इति मम अभिप्रायः'' इति ।

''आज्ञाप्यतां तत् किमिति'' इति विनयेन उक्तवान् नरसिंहशर्मा ।

महाराजः गाम्भीर्येण हसन् उक्तवान् - ''राजीवाक्षं भवान् जामातृत्वेन स्वीकरोति चेत् सः कवितारचनायां भवतः साहाय्यं कुर्वन् स्फूर्तिजनकः भवेत्'' इति ।

एतत् श्रुत्वा नरसिंहशर्मा पुत्रीम् अपृच्छत् - ''किं भवती राजीवाक्षं परिणेतुं सिद्धा ?'' इति ।

''भवतां निर्णयः शिरोधार्यः मम'' इति लज्जया उक्तवती माधवी ।

अनन्तरं नरसिंहशर्मा राजीवाक्षं पश्यन् उक्तवान् - ''एतद्विषये भवतः अभिप्रायः कः इति अहं ज्ञातुम् इच्छामि'' इति ।

तदा राजीवाक्षः सन्तोषेण उक्तवान् - ''मातापितृविहीनः अहम् अस्मि अनाथः । महाकवेः जामातृत्वं यदि प्राप्येत तर्हि तत् महत् सौभाग्यकरं भावयामि अहम्'' इति ।

हर्षपूर्णध्वनिना करताडनेन च कविपण्डितविभूषिता राजसभा एतं प्रस्तावं स्वागतीकृत्य अभिनन्दनम् अकरोत् ।





# चतुरमतिः हुसेनः

कश्चित् यवनराजः हुसेननामकेन मित्रेण सह वनमार्गेण गच्छन् आसीत् । तस्य पुरतः कश्चित् प्रयाणिकः अपि गच्छन् आसीत् ।

महाराजः मित्रम् उद्दिश्य - ''हुसेन ! तत्र गच्छतः जनस्य विषये कानिचन विवरणानि दातुं शक्नोति वा ?'' इति पृष्टवान् ।

हुसेनः गच्छन्तं प्रयाणिकं सुसूक्ष्मम् अवलोक्य - ''प्रभो ! सः कश्चित् तक्षकः अस्ति'' इति उक्तवान् ।

''तस्य नाम किमिति वक्तुं शक्नोति वा भवान् ?'' इति पृष्टवान् ।

''प्रायशः तस्य नाम अपि हुसेनः इति मन्ये, प्रभो'' इति उक्तवान् हुसेनः ।

''एवं तर्हि भवान् तम् इतः पूर्वमेव जानाति स्म इति मन्ये'' इति उक्तवान् महाराजः ।

''नैव प्रभो ! एतम् ऐदम्प्राथम्येन अद्यैव पश्यन् अस्मि'' इति उक्तवान् हुसेनः ।

''तर्हि तस्य नाम कथम् उक्तवान् भवान् ?'' इति पृष्टवान् राजा आश्चर्येण ।

''यदा भवान् मम नाम उच्चार्य आहूतवान् तदा सः अपि परिवृत्य अत्र दृष्टवान् । 'अतः तस्य नाम अपि हुसेनः इत्येव स्यात्' इति अहम् ऊहां कृतवान्'' इति उक्तवान् हुसेनः ।

''उत्तमम् । योग्यम् उत्तरम् एतत् । परन्तु सः तक्षकः इति भवान् कथं ज्ञातवान् ?'' इति पृष्टवान् महाराजः ।

''प्रभो ! गमनसमये सः यस्मिन् वृक्षे प्रभूतानि फलपुष्पादीनि भवन्ति तं वृक्षं न पश्यति स्म । यः वृक्षः हलस्य निर्माणार्थं योग्यः उन्नतः दृढप्रकाण्डेन सहितः च अस्ति तं वृक्षमेव पश्यन् गच्छति । एतम् अंशम् अहम् अवलोकितवान् अस्मि । अतः एव - 'एषः तक्षकः एव' इति अहं निर्णीतवान्'' इति उक्तवान् हुसेनः ।

''साधु ! योग्यं परिशीलनं भवतः ।

भवान् अत्यन्तं कुशलः अस्ति । भवतः बुद्धिमत्तायाः परीक्षार्थमेव अपरः कश्चन प्रश्नः । तत्र गच्छन् सः प्रयाणिकः किञ्चित्समयात् पूर्वं किं खादितवान् इति किं भवान् वक्तुं शक्नोति ?'' इति पृष्टवान् महाराजः ।

किञ्चित्समयं यावत् अवलोक्य हुसेनः उक्तवान् - ''किञ्चित्पूर्वं सः मधु मधुरफलानि वा खादितवान् स्यात्'' इति ।

''तर्हि एतं विषयं तमेव पृच्छाम'' इति उक्त्वा महाराजः करताडनं कृत्वा प्रयाणिकम् आहूतवान् । प्रयाणिकः यदा समीपम् आगतः तदा हुसेनं दर्शयित्वा - ''एतस्य परिचयः अस्ति वा भवतः ?'' इति पृष्टवान् ।

''नास्ति'' इति उक्तवान् प्रयाणिकः ।

''मित्र ! इदानीम् अहं प्रश्नत्रयं पृच्छामि । विना सङ्कोचम् उत्तरं दातव्यम्'' इति उक्तवान् महाराजः ।

''यथाज्ञापयति देवः'' इति उक्तवान् यात्रिकः ।

''भवतः नाम किम् ? भवतः उद्योगः कः । किञ्चित्समयात् पूर्वं भवान् किं खादितवान् ?'' इति पृष्टवान् महाराजः ।

''मम नाम हुसेनः । अहं तक्षकः अस्मि । अर्धघण्टातः पूर्वम् अहं शुद्धं मधु पीतवान्'' इति उक्तवान् प्रयाणिकः ।

''भवतः उत्तरेभ्यः अहं बहु सन्तुष्टोऽस्मि'' इति वदन् हस्ते धृतं कङ्कणं निष्कास्य यात्रिकाय दत्तवान् राजा । यात्रिकः तत् स्वीकृत्य सन्तोषेण ततः निर्गतवान् ।

अनन्तरं महाराजः हुसेनं दृष्ट्वा - ''सः मधु एव पीतवान् इति भवान् कथं ज्ञातवान् ?'' इति आश्चर्येण पृष्टवान् ।

''सः पुनः पुनः ओष्ठं जिह्वया लेढि स्म । द्वित्राः मधुमक्षिकाः तस्य मुखं परितः शब्दं कुर्वत्यः भ्रमन्ति स्म । ताः दूरीकर्तुं प्रयत्नं कुर्वन्तं तम् अहम् अवलोकितवान् । एतत् दृष्ट्वा अहं निर्णीतवान् यत् सः मधु मधुरपदार्थं वा खादितवान् स्यात् इति । एतस्मिन् प्रदेशे मधु अधिकतया लभ्यते इति ज्ञात्वा तेन मधु एव पीतं स्यात् इति अहं चिन्तितवान्'' इति उक्तवान् हुसेनः ।

''भवतः परिशीलनाशक्तिः अपूर्वा । भवतः बुद्धिमत्ता अपि अपूर्वा एव'' इति वदन् हुसेनम् आनन्देन आलिङ्गितवान् महाराजः ।





# सम्राट् अशोकः

४

[वृद्धः बिन्दुसारमहाराजः अनारोग्यपीडितः जातः । ग्रीक्जनानां प्रेरणया तक्षशिलायां जनाः राजविरोधम् आचरन्तः सन्ति इति वार्तां ज्ञातवान् राजा । प्रधानमन्त्रिणः सूचनानुसारं सः स्वपुत्रान् आहूय - ''तक्षशिलायाम् उत्पन्नस्य राजविरोधस्य निग्रहार्थं गन्तुं सैन्यस्य नायकत्वं कः स्वीकर्तुं सिद्धः अस्ति ?' इति पृष्टवान् । पितुः आज्ञां परिपालयितुम् अशोकः अग्रे आगतः । तदनन्तरम् ---]

तस्मिन् दिने सायङ्काले युवराजः अशोकः सेनाधिपतिं द्रष्टुं गतवान् । तस्मात् पूर्वम् एव सेनाधिपतिः प्रधानमन्त्रिणः द्वारा तक्षशिलायां विद्यमानस्य विप्लवस्य विषये ज्ञातवान् आसीत् इति कारणतः सः सैन्यस्य सन्नद्धतायां मग्नः आसीत् । सः अशोकं दृष्ट्वा अनुक्षणं नामस्कृत्य - ''युवराज ! अहम् अपि भवता सह तक्षशिलाम् आगमिष्यामि'' इति उक्तवान् ।

''भवतः अभिमानः मम सन्तोषाय एव । परन्तु राजा अनारोग्येण पीडितः अस्ति इत्यतः इदानीं राजधान्याम् एव भवतः स्थितिः उचिता खलु ? अतः भवान् अत्रैव तिष्ठतु । विश्वासपात्रभूतौ दलपती मया सह प्रेषयतु । तावता अलम्'' इति सेनापतिम् उक्तवान् अशोकः ।

''भवता उक्तं युक्तमेव । एतस्यां परिस्थितौ राजधान्यां राज्ञः पार्श्वे स्थितिः



एव उचिता । भवतः निर्णयः श्लाघनीयः एव । अस्माकं सैन्यस्य उत्तमभागं, समर्थान् दलपतीन् च भवता सह प्रेषयिष्यामि । तदर्थं सन्नाहाः इदानीम् एव आरब्धाः सन्ति'' इति उक्तवान् सेनाधिपतिः ।

''साधु, साधु'' इति उक्त्वा ततः निर्गतः अशोकः ।

अनुक्षणमेव सैनिकसन्नाहाः आरब्धाः । प्रासादस्य पुरतः विद्यमाने विशाले प्राङ्गणे गजाः, अश्वाः च अनुपङ्क्तौ स्थापिताः । सैनिकाः सर्वे आयुधानां तीक्ष्णीकरणे आवश्यकोपकरणानां सङ्ग्रहणे च मग्नाः अभवन् ।

एतं सन्नाहं दृष्टवतः राज्ञः ज्येष्ठकुमारस्य सुषेणस्य मनसि असूया उत्पन्ना । सः रहस्यरीत्या सेनाधिपतेः समीपं गत्वा - ''कुत्रचित् प्रचलिष्यमाणं कोलाहलं शमयितुं महतः युद्धस्य कृते इव सन्नाहः आवश्यकः किम् ?'' इति पृष्टवान् ।

एतं प्रश्नं श्रुतवान् सेनाधिपतिः दिग्भ्रान्तः जातः । ''युवराज ! शत्रूणां शक्तिः न्यूना इति कदापि न भावनीयम् । लघुसर्पः चेत् अपि बृहता दण्डेन एव ताडनीयः । अपि च एतस्य विप्लवस्य पृष्ठभागे विद्यमानाः ग्रीक्जनाः युक्तिशीलाः विवेकिनः धनशालिनः च सन्ति । तत्रत्यजनाः अस्मान् सम्मुखीकर्तुं शक्तिसामर्थ्यं सम्पादितवन्तः सन्ति इति विषये कोऽपि संशयः नास्ति । अपि च युवराजः अशोकः ऐदम्प्राथम्येन सैन्यस्य नायकः भूत्वा गच्छन् अस्ति । तस्य विजयप्राप्त्यर्थम् आवश्यकः सन्नाहः मया एव करणीयः अस्ति । अन्यच्च एषः राजवंशस्य गौरवसम्बद्धः विषयः खलु ?'' इति उक्तवान् ।

''कस्य गौरवस्य विषये भवान् वदन् अस्ति ? मगधसाम्राज्यस्य भाविमहाराजस्य अशोकस्य गौरवविषये वदन् अस्ति किम् ?'' इति उपहासपूर्वकं सेनाधिपतिं पृष्टवान् सुषेणः ।

''एतस्य राज्यस्य भावी राजा भवान् एव, न अशोकः इति अहं जानामि । तक्षशिलां प्रति भवान् एव सैन्यं स्वीकृत्य गन्तुम् अशक्ष्यत् । यदि तथा कृतं स्यात् तर्हि भाविराजस्य भवतः प्रथमविजयं दृष्ट्वा जनाः महान्तं सन्तोषम् अनुभूतवन्तः स्युः । प्रजानाम् अभिमानं गौरवं च सम्पादयितुम् एषः उत्तमः अवकाशः आसीत् भवतः जीवने । उत्तमः अवकाशः नष्टः जातः

इति विनयेन उक्तवान् सेनाधिपतिः ।

"सेनाधिपते ! भवान् यदि मम सहायकरूपेण अभविष्यत् तर्हि अहं विजयम् प्राप्तवान् एव स्याम्" इति मन्दस्वरेण उक्तवान् सुषेणः ।

"युवराज ! भवान् किं वदन् अस्ति इति एव न ज्ञायते मया" इति उक्तवान् सेनाधिपतिः ।

"सेनाधिपते ! मम पितुः अनन्तरं एतस्य सुविशालस्य मगधराज्यस्य सिंहासनारोहकः अहम् एव इति तु भवता ज्ञातम् अस्ति एव । जनानां गौरवसम्पादनम् अपि मया करणीयम् अस्ति । तदर्थं सेनाधिपतिना भवता सहकारः दातव्यः अस्ति खलु ?" इति उक्तवान् सुषेणः ।



"भवान् किं वदन् अस्ति इति इतोऽपि मया न ज्ञातं युवराज । एवं तर्हि तक्षशिलाम् आक्रमितुं गच्छतः सैन्यस्य नायकत्वं भवान् किमर्थं न अङ्गीकृतवान् ?" इति पृष्टवान् सेनाधिपतिः ।

"इतोऽपि स च अवकाशः न समाप्तः खलु ? अहम् एव सैन्यस्य नायकः भविष्यामि । परन्तु तदर्थं भवतः साहाय्यम् आवश्यकम् अस्ति । इदानीं यदि भवान् साहाय्यं करिष्यति तर्हि अग्रे यदा अहं राजा भविष्यामि तदा भवतः अपेक्षाः पूरयिष्यामि । तदर्थं भवता करणीयम् एतावदेव । एतस्यां दण्डयात्रायाम् अशोकः पराजितः भवेत् । अनन्तरम् अहं सैन्यस्य नायकः सन् तक्षशिलां गत्वा भवतः साहाय्येन जयं प्राप्य राजधानीं प्रत्यागमिष्यामि । तेन सेविकायाः पुत्रस्य अशोकस्य अहङ्कारः नश्येत् । अतः भवान् दुर्बलान् सैनिकान् अशोकेन सह प्रेषयतु । तेन सह भवता न गन्तव्यम् । द्वित्राः अप्रयोजकाः सामान्याः दलपतयः गच्छन्तु नाम । अस्माकं कार्यसाधनार्थम् एतत् एकं पर्याप्तम् । एतस्मिन् विषये भवति अहं पूर्णरूपेण विश्वसिमि । एषः विषयः रहस्यरूपेण भवतु । ज्ञातं खलु" इति सेनापतिम् उक्तवान् सुषेणः ।

एतानि वचनानि श्रुत्वा सेनाधिपतिः दिग्भ्रान्त्या मूकः जातः । परन्तु तस्य अवस्थां ज्ञातवान् सुषेणः - "भवान् यदि एतत् कार्यं कुर्यात् तर्हि तदर्थं योग्यम् उपायनं प्राप्नुयात् । अस्माकं राज्ये भवादृशः उन्नतः अधिकारी एव न भविष्यति । महाराजस्य अनन्तरं भवतः एव



न पालयति खलु भवान् ?'' इति कोपेन पृष्टवान् ।

''योग्याः आज्ञाः निश्चयेन पालयेयम् । किन्तु एतादृशीम् आज्ञां तु सर्वथा न पालयिष्यामि'' इति उक्तवान् सेनाधिपतिः ।

''तथा चेत् नूतनः सेनापतिः निश्चेतव्यः'' इति उक्तवान् सुषेणः ।

''भवान् यदा महाराजः भविष्यति तदा चिन्तनीयः विषयः सः । अतः इदानीं तद्विषये न कापि चिन्ता मम । परन्तु राजपरिवारेषु एव एतादृशानि कुतन्त्राणि भविष्यन्ति चेत् राजाधिपत्यं दृढं चिरस्थायि च भवितुं कथं वा शक्यते ? युवराज ! कृपया मम सूचनां ...'' इति किमपि वक्तुम् उद्युक्तः आसीत् सेनाधिपतिः ।

''भवतः मार्गदर्शनस्य आवश्यकता नास्ति मम'' इति क्रोधेन वदन् ततः गतवान् सुषेणः ।

सुषेणस्य दुरालोचनातः खिन्नः सेनाधिपतिः विशेषावधानपूर्वकं सैन्यं सज्जी- कृतवान् ।

अनन्तरदिने प्रातःकालात् पूर्वम् एव अशोकः सैन्येन सह तक्षशिलां प्रति प्रस्थितवान् । अशोकस्य पृष्ठतः एव किञ्चिद्दूरं गतः सेनाधिपतिः उक्तवान् - ''युवराज ! भवतः प्रयत्नः जयप्रदः भवतु इति आशासे । स्वीकृतं कार्यं भवान् सुलभतया साधयिष्यति इत्यपि मम विश्वासः अस्ति । अन्यः एकः मुख्यविषयः । भवतः अङ्गरक्षकत्वेन द्वादश समर्थान् योधान् प्रेषयन् अस्मि । तथापि स्वरक्षणविषये भवान् जागरूकः भवतु ।

अत्युन्नतः अधिकारः भविष्यति । किं वदति भवान् ?'' इति उक्तवान् ।

''युवराज ! भवान् मम राजभक्तेः परीक्षार्थम् एव एवं वदन् अस्ति इति भावयामि'' इति शिरः अवनमय्य उक्तवान् सेनाधिपतिः ।

''तथा नैव । अशोकस्य अहङ्कारः नाशनीयः । एषा एव मम अपेक्षा । मया उक्तं सर्वम् अपि अक्षरशः सत्यम् । किञ्चित् अपि सन्देहः नास्ति अत्र'' इति दृढस्वरेण उक्तवान् सुषेणः ।

''तथा वा ? तर्हि श्रृणोतु । भवतः अपेक्षा दिग्भ्रान्तिजनिका अस्ति । राजद्रोहकार्येषु अहं कदापि भागग्राही न भविष्यामि'' इति उक्तवान् सेनाधिपतिः ।

तदा खिन्नः सुषेणः - ''तर्हि मम आज्ञां



भवान् यदा शत्रून् जित्वा विजयवध्वा सह आगमिष्यति तदा भवन्तं कांश्चन विषयान् वक्ष्यामि'' इति ।

तस्मिन् दिने प्रातः राजधानीतः प्रस्थाय निरन्तरप्रयाणं कृत्वा सायङ्काले अन्धकार-प्रसारस्य अनन्तरं अशोकस्य सैन्यं तक्षशिलानगरस्य सीमां प्राप्नोत् । तत्र पर्वतस्य उपत्यकायां प्रशस्ते स्थले सैनिकाः तात्कालिकगृहाणि निर्माय स्थितवन्तः । अनन्तरदिने प्रातः एव अशोकः विप्लवोत्पादकान् सन्देशं प्रापयितुं कांश्चन दूतान् तक्षशिलानगरं प्रति प्रेषितवान् ।

तस्मात् पूर्वम् एव विप्लवोत्पादकाः अविवेकेन व्यवहरन्तः मगधराज्यस्य प्रतिनिधीन् नगरात् बहिः प्रेषितवन्तः आसन् । कांश्चन जनान् निर्दयतया मारितवन्तः आसन् अपि । तक्षशिलानगरं पूर्णतया तेषाम् अधीनं जातम् आसीत् ।

राजदूताः विप्लवोत्पादकानां समीपं गत्वा - ''महाराजः अनारोग्यपीडितः अस्ति । एतस्यां स्थितौ सर्वासां समस्यानां कृते अपि शान्तियुक्तपरिहारः एव भवतु इति राज्ञः अपेक्षा । भवताम् अपेक्षाः यदि सूच्यन्ते तर्हि तासां परिशीलनं राज्ञा क्रियते'' इति उक्तवन्तः ।

दूतानां गमनानन्तरम् अशोकस्य सूचनानुसारं शताधिकसैनिकाः यात्रिक-वणिग्-भिक्षुकवेषादिकं धृत्वा रहस्यरीत्या नगरं प्रविश्य विप्लवोत्पादकानां व्यवहाराणां परिशीलनम् आरब्धवन्तः ।

प्रतिदिनम् अपि रात्रौ एते विप्लवोत्पादकाः ग्रीक्पोषकैः मिलित्वा विचारविनिमयं कुर्वन्ति स्म । रात्रौ तेषां यथापूर्वम् मेलनविचारः अशोकेन ज्ञातः । तस्य सूचनानुसारं सैनिकाः अन्यवेषं धृत्वा तत् भवनं परितः निलीय स्थितवन्तः । अनन्तरं नगरात् बहिः स्थिताः मगधसैनिकाः प्रवाहवत् आगत्य हठात् नगरम् आक्रान्तवन्तः ।

विप्लवोत्पादकाः ग्रीक्मित्राणि च भवनात् बहिः आगन्तुं यद्यपि बहु प्रयत्नं कृतवन्तः तथापि ते अशक्ताः जाताः । किञ्चित्समयस्य सङ्ग्रामस्य अनन्तरं ते सर्वे अपि अशोकसैन्यं शरणं गताः ।

विप्लवोत्पादकानाम् अल्पं सैन्यम् यद्यपि आसीत्, तथापि युद्धनीतेः शिक्षणाभावात् तत् किमपि कर्तुं न अशक्नोत् । शत्रूणां प्रहारात् ऋते अन्यः रक्षणोपायः तैः न ज्ञातः

आसीत् । ते कुत्रचित् अशोकस्य सैन्येन सह सङ्ग्रामं कृतवन्तः । परन्तु मगधसैनिकानां प्रबलम् आक्रमणं सम्मुखीकर्तुं अशक्ताः ते धावितवन्तः । केचन प्राणैः वियुक्ताः अभवन् ।

प्रातःकालाभ्यन्तरे एव राजविरोधम् आचरतां प्रयत्नाः सर्वे असफलाः जाताः । नगरम् अशोकसैन्याधीनं जातम् । राजविरोधिनायकाः सर्वे बद्धाः । ततः ते नगरस्य मध्यभागम् आनीताः । नगरस्य मध्ये उन्नते समतलप्रदेशे विशालायाः शिलायाः उपरि ते स्थापिताः । नगरस्य जनाः सर्वे तत्र आगच्छेयुः इति उद्घोषणं कृतम् । तक्षशिलायाः जनाः सर्वे - 'तत्र किं प्रचलति इति पश्याम' इति चिन्तयन्तः कुतूहलेन तत्र समागताः ।

अल्पे एव काले युवराजः अशोकः अश्वारूढः सन् तत्र आगतवान् । शिरः अवनमय्य स्थितान् बन्दिजनान् दृष्ट्वा अशोकः - ''भवद्भिः किमपि कष्टम् अनुभूयते चेत् अधिकारिणः खलु वक्तव्याः ? किन्तु एतद्विपरीततया भवन्तः मगधाधिकरिणः मारयित्वा तेषां सम्पत्तिं स्वायत्तीकर्तुं प्रयत्नं कृतवन्तः । एषा दुर्बुद्धिः कथं भवतां मनसि उत्पन्ना ?'' इति पृष्टवान् ।

किञ्चित्कालं यावत् सर्वे मौनं स्थितवन्तः । अनन्तरं कश्चित् - ''अस्माकं समस्याः वयम् अत्रत्यं राजप्रतिनिधिम् उक्तवन्तः । परन्तु सः उपेक्षां कृतवान्'' इति उक्तवान् ।

''भवतु । राजप्रतिनिधिः उपेक्षां कृतवान् इत्येव भावयाम । तथापि भवद्भिः सः च विषयः महाराजं प्रति प्रधानमन्त्रिणं प्रति वा वक्तव्यः आसीत् खलु ? किमर्थं तथा न कृतम् ?'' इति पृष्टवान् अशोकः । तस्य



किमपि उत्तरं न प्राप्तम् ।

''समस्यानां विषये राजा न उक्तः । आस्तां तावत् तत् । एतस्मिन् विषये परदेशीयैः सह वार्तालापः किमर्थं कृतः ? अस्माकं राज्यस्य आन्तरिकव्यवहारे विरोधिनां तेषाम् अक्रमप्रवेशः वा किमर्थम् ?'' इति पृष्टवान् अशोकः ।

तस्य प्रश्नस्य अपि उत्तरं तैः न दत्तम् ।

''ग्रीक्जनैः मिलित्वा स्थलीय-स्वार्थिभिः कैश्चित् आयोजितस्य कुतन्त्रस्य फलमेव एषः विप्लवः इति स्पष्टतया ज्ञातम् अस्ति । मौर्यसाम्राज्यस्य स्थापकः चन्द्रगुप्तः ग्रीक्जनान् एतस्मात् प्रदेशात् अपसारितवान् आसीत् । परन्तु तेषां कुतन्त्रम् अजानन्तः भवन्तः तैः सह मिलित्वा राज्ये भ्रमनिर्माणं यत् कुर्वन्तः सन्ति तत् किम् उचितम् ? भवतां व्यवहारस्य समर्थनं वा कथम् ? स्वदेशम् अन्येभ्यः दातुम् उद्युक्ताः भवन्तः सर्वथा देशद्रोहिणः निर्लज्जाः च । नीचस्वभावः भवताम् । क्षमार्हाः न भवन्तः । अतः भवन्तः योग्यरीत्या दण्डनीयाः एव'' इति गम्भीरस्वरेण उक्तवान् अशोकः ।

'एतेषां कीदृशदण्डनं भविष्यति' इति ज्ञातुं सर्वे जनाः अत्यन्तं कुतूहलेन उपविष्टवन्तः । अशोकः गम्भीरस्वरेण - ''अस्माकं देशे विप्लवं जनितवतां परदेशीयानां मरणदण्डनं भविष्यति । तेभ्यः सहकारं दत्तवतां राजद्रोहिणाम् अपि मरणदण्डनं भविष्यति'' इति उक्त्वा पृष्ठतः परिवृत्य ततः गन्तुम् उद्युक्तः ।

''क्षम्यतां महाराज ! अज्ञात्वा अपराधः कृतः अस्माभिः । इतः परं उत्तमरीत्या एव व्यवहरिष्यामः । इदानीम् अस्माभिः विवेकः प्राप्तः अस्ति । प्राणभिक्षया अनुग्रहणीयाः वयम्'' इति वदन्तः बन्दिजनाः रोदनस्य आरम्भं कृतवन्तः ।

अशोकः क्षणकालं यावत् विचिन्त्य - ''करुणया कदापि विश्वासद्रोहिणः न क्षन्तव्याः । एतत् दण्डनम् अन्यजनेषु जागरणम् उत्पादयिष्यति'' इति उक्त्वा अधिकारिणः सकृत् दृष्ट्वा अश्वम् आरुह्य शिबिरं गतवान् ।

अनुक्षणमेव बन्दिजनानां मारणस्य आरम्भः जातः । तत्रत्यः परिसरः घोररूपं प्राप्नोत् । - (अनुवर्तते)





# स्वयं निखातः गर्तः

दृढव्रती राजा त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा तत्र लम्बमानं शवम् आदाय स्कन्धे स्थापयित्वा यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितः । तदा शवान्तर्गतः वेतालः - "भोः राजन् , एतादृशे भयङ्करे श्मशाने एतस्मिन् मध्यरात्रसमये अपि किमर्थं व्यर्थं प्रयत्नं करोति भवान् ? किं वा साधयितुं प्रवृत्तः भवान् ? यदि भवान् अद्भुतशक्तिसम्पादने आसक्तः अस्ति तर्हि तदर्थम् अनेके मार्गाः सन्ति एव किल ? यतः तपस्साधनेन अपि अद्भुतशक्तयः वशीभवन्ति । तादृशीं शक्तिं प्राप्तवद्भिः सिद्धपुरुषैः अद्भुतशक्तयः परोपकाराय एव उपयोक्तव्याः भवन्ति । अन्यथा ताः एव शक्तयः तेषां विनाशाय एव भवेयुः कदाचित् । एवं स्थिते अपि कश्चन सिद्धमन्त्रः महामुनिः स्वार्थाय एव स्वस्य तपस्सिद्धिम् उपयुक्तवान् । तथापि तस्य

## वेतालकथा



शक्तिः फलप्रदा अभवत् । तस्य काऽपि हानि न अभवत् । एषः अंशः भवतः अपि अग्रे मार्गदर्शकः भवतु इति उद्देशेन तद्विषयिकां कथां कथयामि । श्रृणोतु तावत्'' इति वदन् कथाम् आरब्धवान् -

पूर्वं पद्माकरः, रत्नाकरः चेति सहोदरौ आस्ताम् । अग्रजः पद्माकरः वाणिज्ये कुशलः आसीत् । रत्नाकरम् अपि आत्मना सह वाणिज्यार्थं प्रेरितवान् सः । किन्तु रत्नाकरः तत् निराकृत्य - ''अहं विदेशं गत्वा उन्नताध्ययनं कर्तुम् उत्सुकः अस्मि । पित्रार्जितसम्पत्तेः मदीयं भागं मह्यम् अर्पयतु भवान्'' इति अग्रजं सूचितवान् ।

तदा पद्माकरः अनुजे रत्नाकरे विश्वस्य ग्रामज्येष्ठानां पुरतः एव पितृसम्पत्तिं विभज्य अर्धभागं तस्मै दत्तवान् । तं भागं स्वीकृत्य रत्नाकरः विदेशेषु अटन् सर्वं धनं विलासि-जीवनाय व्ययीकृतवान् । अन्ते रिक्तहस्तः सन् सः ग्रामम् आगतवान् । भ्रातुः समीपम् आगत्य - 'सर्वं धनं चोरैः अपहृतम्' इति असत्यवचनम् उक्तवान् सः ।

''भवान् मम गृहे एव वासं करोतु'' इति सूचितवान् पद्माकरः ।

तदा रत्नाकरः उक्तवान् - ''स्वाभिमान-वान् पुरुषः अन्यस्य आश्रये न वसति । स्वावलम्बी भवितुम् इच्छति सः । अतः भवान् किञ्चित् धनम् ऋणरूपेण ददातु । तेन अहं वाणिज्यं करिष्यामि'' इति ।

तस्य वचनं श्रुत्वा विहस्य अवदत् पद्माकरः - ''स्वाभिमानिनः वाणिज्यार्थं मूलधनम् अपि स्वयं सम्पादयन्ति, न तु अन्येभ्यः स्वीकुर्वन्ति । अतः भवान् योग्याम् एकां कन्यां परिणयतु । अस्मिन् एव ग्रामे लक्ष्मीपतेः पुत्री कनका भवतः अनुरूपा अस्ति । तां परिणीय तस्याः धनेन एव वाणिज्यस्य आरम्भं करोतु'' इति ।

ततः मासाभ्यन्तरे एव रत्नाकर-कनकयोः विवाहः प्रवृत्तः । वाणिज्ये अकुशलः रत्नाकरः यद्यपि महान्तं लाभं न प्राप्तवान्, तथापि जीवननिर्वहणार्थं यावत् आवश्यकं तावत् तु धनं प्राप्नोति स्म । कालक्रमेण पुत्रत्रयं जातं तस्य ।

पद्माकरस्य तु एकः एव पुत्रः आसीत् । यदा सः दशवर्षीयः आसीत् तदा एव तस्य माता दिवङ्गता । पद्माकरः पत्न्यां विशेषानुरागवान् आसीत् । पत्न्याः चिरविरहं सोढुम् अशक्तः सः विरक्तः जातः । सः वैराग्येण सुतस्य समग्रसम्पत्तेः

च रक्षणदायित्वं अनुजाय रत्नाकराय समर्प्य तपः कर्तुं हिमालयं गतवान्। तेन च रत्नाकरः महाधनिकः अभवत्।

तयोः दम्पत्योः मनसि भयम् आसीत् यत् पद्माकरस्य पुत्रः सुन्दरः यदा युवकः भविष्यति तदा तस्मै सर्वा सम्पत्तिः दातव्या भविष्यति इति। अतः रत्नाकरः एकम् उपायं चिन्तितवान्। तदनुसारं सः अग्रजस्य पुत्रस्य मनः एव स्वस्य नियन्त्रणे स्थापितवान्। आरम्भे सः एवम् उपदेशं कृतवान् - "पुत्र, अहम् अधिकं शास्त्रादिकम् अधीतवान्। अतः एव नानाविधैः दुरभ्यासैः ग्रस्तः सन् अहं सर्वां सम्पत्तिं नष्टां कृतवान्। ततः भवतः पित्रा मम अध्ययनं स्थगितम्। तेन मया महान् लाभः प्राप्तः। अतः भवान् अपि अध्ययनं त्यजतु" इति। तत् श्रुत्वा सुन्दरः अध्ययनं समग्रतया त्यक्तवान्।

अनन्तरम् अपि एकस्मिन् दिने रत्नाकरः सुन्दरम् आहूय - "सुन्दर, अस्मिन् ग्रामे बहवः जनाः भवतः पितुः विश्वासपात्रताम् आपन्नाः आसन्। तथापि भवतः समग्रं पोषणदायित्वं मह्यं दत्तम् अस्ति भवतः पित्रा। एतेन सिद्धं यत् भवतः पितुः अहम् एव अत्यन्तं विश्वासपात्रम् इति। मत्तः एव भवतः प्रगतिः सेत्स्यति इति खलु भवतः पितुः आशयः?" इति उक्तवान्।

'एतत् सर्वं सत्यम् एव' इति चिन्तयन् सुन्दरः पितृव्यस्य वचनम् एव पालितवान्। ग्रामस्थाः केचन यदा तस्य पितृव्यं निन्दितवन्तः, तदा सुन्दरः तेषु क्रोधं प्रदर्श्य तेषां मुखपिधानं कृतवान्।



पुनः कदाचित् रत्नाकरः सुन्दरम् उद्दिश्य - "एतत् ऐश्वर्यं शाश्वतं न स्थास्यति। अतः शरीरश्रमेण अस्माभिः कार्यं कृत्वा धनं सम्पादनीयम्। भवान् अपि इतः परं गृहे सर्वकार्याणि करोतु" इति उक्तवान्। ततः सुन्दरः गृहकर्मकरेषु अन्यतमः अभवत्।

पुनः अन्यास्मिन् दिने रत्नाकरः सुन्दरम् आहूय - "अन्ये अत्र किमपि कार्यं न कुर्वन्ति इति भवान् चिन्तयेत् कदाचित्। एतत् न उचितम्। वस्तुतः चिन्तनम् एव अस्माकं प्रबलशत्रुः। भवतः पिता अपि पत्न्याः मरणेन चिन्तां प्राप्तवान्। अन्ते वैराग्यतः सर्वं त्यक्त्वा हिमालयं गतः। अतः भवतः पोषणं भवतः चिन्तनदायित्वं चापि वयम् एव निर्वक्ष्यामः। भवान् तूष्णीं



भवतु'' इति उक्त्वा तस्य उपरि पूर्णं नियन्त्रणं प्राप्तवान् । ततः प्रभृति सुन्दरः आलोचयितुं प्रयत्नम् अपि न कृतवान् । किन्तु तदा तदा पितृव्यस्य विषये सः कोपं प्राप्नोति स्म । एतत् ज्ञात्वा रत्नाकरः - ''पुत्र, एवं ज्येष्ठेषु कोपः न करणीयः । कोपः कृतः चेत् मातापित्रोः दुःखं भवति । यदि भवान् ज्येष्ठानां दूषणं करोति तर्हि स्वर्गस्था भवतः माता दुःखम् अनुभवति । हिमालये स्थितः पिता रोगेण पीडितः भवति'' इति वदन् सुन्दरस्य मनसि भयम् उत्पादितवान् । ततः परं तु सुन्दरः शान्तमूर्तिः एव अभवत् ।

सुन्दरस्य एतादृशीं परिस्थितिं दृष्ट्वा खिन्नाः ग्रामस्थाः केचन रत्नाकरं - 'सन्मार्गेण गच्छतु' इति उपदिष्टवन्तः । तदा रत्नाकरः उक्तवान् - ''एतस्य पिता संन्यासी । एषः अपि तथा एव संन्यासिजीवनं यापयितुम् इच्छति । एतत् तस्य सौभाग्यम् । यथा भगवान् शङ्करः तथा एषः अपि महत् मनस्स्थैर्यं सम्पादितवान् अस्ति । सर्वैः एवं वैराग्यं न प्राप्यते । यद्यपि वयम् अपि तथा वैराग्यं प्राप्तुम् इच्छामः, तथापि तादृशं सौभाग्यम् अस्माकं कुतः भवेत् ? अतः एषः नूनं भाग्यवान्'' इति ।

पितृव्यस्य एतानि वचनानि श्रुत्वा सुन्दरः अत्यन्तं हर्षं प्राप्नोति स्म । सः आत्मानं भाग्यवन्तं मन्यमानः 'तत् भाग्यं पितृव्यस्य अनुग्रहात् एव' इति निश्चितवान् ।

एवं वर्षचतुष्टयं यापितं तेन । अत्रान्तरे हिमालयतः तपः समाप्य आगतवान् पद्माकरः । तपःप्रभावेण काश्चन अद्भुतशक्तयः तस्य वशं गताः आसन् । तेन मनसः शान्तिः अपि सम्पादिता आसीत् ।

पुत्रं द्रष्टुम् इच्छन् सः ग्रामम् आगतवान् । किन्तु तस्य मुखं श्मश्रुयुक्तम् आसीत् । अतः कोऽपि तं न अभिज्ञातवान् । मुनिः इव पद्माकरः स्वस्य गृहस्य पुरतः आगत्य स्थितवान् । रत्नाकरः अपि तं कञ्चन मुनिं भावयन् - 'गृहस्य अन्तः आगच्छतु' इति विनयेन प्रार्थितवान् ।

गृहे तस्य सेवार्थं सुन्दरः एव नियुक्तः अभवत् । सुन्दरः श्रद्धया सेवां करोति स्म । अल्पे एव काले पद्माकरः सुन्दरस्य परिस्थितिं ज्ञातवान् । ''अयि बाल, भवान् अस्ति अस्य गृहस्य स्वामी । किमर्थम् एवं सेवकः इव कार्यं करोति भवान् ?'' इति तं

पृष्टवान् पद्माकरः ।

तदा झटिति उत्थाय सुन्दरः - ''एतत् मम सौभाग्यम्'' इति उक्तवान् ।

तदा पद्माकरः खेदेन - ''बालक, भवतः पितृव्यः अत्यन्तं दुष्टः अस्ति । सः इदानीं भवन्तं वञ्चितवान् अस्ति'' इति उक्तवान् ।

तत्क्षणे एव सुन्दरः कोपदृष्ट्या पितरं पश्यन् अन्तः गत्वा रत्नाकरं प्रति - ''भवान् दुष्टः इति, वञ्चकः इति च सः संन्यासी वदन् अस्ति । एतत् सर्वं सोढुम् अहम् असमर्थः । अतः तस्य सेवां कर्तुं न इच्छामि अहम्'' इति उक्तवान् ।

रत्नाकरः सुन्दरेण सह संन्यासिनः समीपम् आगत्य - ''भवान् नूनं श्रेष्ठसंन्यासी स्यात् इति चिन्तितवान् आसम् । किन्तु भवान् अपि अन्ये इव मां दुष्टः, वञ्चकः इति निन्दन् दूषयन् च अस्ति किल ? एषः मम भ्रातुः सुतः मत्प्राणसदृशः अस्ति । मम विषये कम् अपि अपचारं न सहते एषः । एतत् सर्वं सम्यक् जानातु भवान्'' इति उक्तवान् ।

तदा पद्माकरः - ''आम् । अहं नूनम् ऋषिपुङ्गवः एव । अतः भवतः सर्वविधान् वञ्चनाप्रकारान् जानामि । किन्तु मम विषये भवतः सन्देहः अस्ति किल ? तत्परिहाराय सुन्दराय एकं वरं दातुम् इच्छामि'' इति कोपपूरितस्वरेण उक्तवान् । अनन्तरं सुन्दरं दृष्ट्वा - ''अन्येषाम् अपायः यथा न स्यात् तथा कञ्चन वरं प्रार्थयतु'' इति उक्तवान् ।

सुन्दरः रत्नाकरं दृष्टवान् । रत्नाकरः सङ्केतेन 'वरं प्रार्थयतु' इति सूचितवान् ।

''अहं भाग्यवान् । यतः मम सर्वं



दायित्वं स्वीकृतवान् अस्ति एषः मम पितृव्यः । अतः मह्यम् आवश्यकं किमपि नास्ति'' इति उक्तवान् सुन्दरः ।

तदा हृष्टः रत्नाकरः गर्वेण - ''दृष्टवान् किल भवान् ! स्वयं चिन्तयितुम् अपि मम भ्रातुष्पुत्रस्य सामर्थ्यं नास्ति'' इति उक्तवान् ।

पद्माकरः सर्वं ज्ञातवान् । 'मम पुत्रः सर्वथा अप्रयोजकः जातः अस्ति । कथम् एषः उद्धरणीयः' इति सः क्षणकालं यावत् चिन्तितवान् तावति काले रत्नाकरः एव सुन्दरं प्रति - ''सुन्दर, एषः ऋषिवरः महिमावान् इति भाति । सः स्वयम् इदानीं वरं दातुम् इच्छति । अतः भवान् तिरस्कारं मा करोतु'' इति उक्तवान् ।

तदा सुन्दरः विचारम् अकृत्वा उक्तवान् - '' इतः परं मम सर्वं सौभाग्यं पितृव्यस्य

अधीनं भवतु । तस्य भाग्यं मदीयं भवतु । एतस्मात् ऋते पितृव्यस्य सन्तोषकरम् अन्यं कमपि वरं न जानामि'' इति ।

पद्माकरः - ''तथास्तु'' इति उक्तवान् । तस्मिन् एव क्षणे सः वरः फलितः । तदारभ्य सुन्दरः गृहस्य स्वामी अभवत् । रत्नाकरः तस्य अधीनः अभवत् । तस्य चिन्तनसामर्थ्यम् अपि नष्टम् आसीत् । सामान्यः सेवकः अभवत् सः । पद्माकरः सन्तोषेण पुनः हिमालयं गतः ।

एवं कथां समाप्य वेतालः - ''राजन्, तान्त्रिकाः, मान्त्रिकाः वा स्वशक्तीनाम् उपयोगं स्वार्थाय एव कुर्वन्ति । किन्तु ऋषयः, तपस्विनः, सत्पुरुषाः वा तथा न कुर्वन्ति । यदि ते तथा कुर्वन्ति तर्हि तेषां सिद्धयः फलदायिन्यः न भवन्ति । किन्तु पद्माकरः स्वार्थबुद्ध्या एव वरं दत्तवान् । सः वरः भ्रातुः अनिष्टकारकः अपि आसीत् । तथापि सः वरः कथं फलितः ? एतत् अधार्मिकं किल ? एतत् सत्पुरुषाणां कर्म नास्ति किल ? एतेषां समाधानं ज्ञात्वा अपि भवान् न वदति चेत् भवतः शिरः सहस्रधा भग्नं भवति'' इति उक्तवान् ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''दुराशः रत्नाकरः पद्माकरस्य पुत्रस्य चिन्तनसामर्थ्यम् अपि नाशयित्वा जडवस्तुस्तरे तं स्थापितवान् आसीत् । तस्य परिणामतः एव सः आत्मना निखातं गर्ते स्वयं पतितः । प्रथमम् एव नयवञ्चकस्य रत्नाकरस्य प्रशंसां श्रुत्वा श्रुत्वा सुन्दरस्य मनसि - 'अहं भाग्यशाली' इति भावना दृढा जाता आसीत् । तथैव - 'पितृव्यः दौर्भाग्यवान्' इत्यपि अभिप्रायः दृढः जातः आसीत् । अतः सः अन्येषाम् अनुपकारकं पितृव्यस्य उपकारकं वरं प्रार्थयितुम् इच्छन् परोपकारबुद्ध्या एव तं वरं प्रार्थितवान् । अतः एव सः वरः फलितः । अपि च यदि सः पद्माकरः इच्छेत् तर्हि स्वशक्तीः उपयुज्य रत्नाकराय शापं दातुम् अपि समर्थः अभविष्यत् । तथापि सः तथा न कृतवान् । उपायेन दुष्टदण्डनं कृत्वा स्वार्थं विना हिमालयं गतवान् । सर्वत्र दुष्टानां दण्डनं धर्मसम्मतं कार्यम्'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# भट्टस्य वचनचातुरी

कस्यचित् राज्ञः आस्थाने नारायणभट्टः नाम विदूषकः आसीत् । सः स्ववाक्कौशलेन सर्वान् तोषयति स्म । तस्मै दुर्गपार्श्वे स्थितम् एकं सुन्दरं गृहं दत्तवान् आसीत् राजा । तस्मिन् गृहे नारायणभट्टः सुखेन वसति स्म। परन्तु कदाचित् बाहुबलनामकः मल्लः पार्श्वगृहे वासं कर्तुम् आगतवान् । ततः रात्रौ नारायणभट्टस्य निद्राभङ्गः आरब्धः ।

एतस्य कारणं तु मल्लस्य शुनकः आसीत् । सः शुनकः रात्रौ कर्णकठोरतया भषन् नारायणभट्टस्य निद्राभङ्गं करोति स्म । कानिचन दिनानि एतत् कथञ्चित् सोढवान् नारायणभट्टः । अन्ते निद्राभङ्गं सोढुम् अशक्नुवन् सः मल्लम् एतं विषयम् उक्त्वा - ''रात्रौ शुनकः विना कारणं यथा न भषेत् तथा व्यवस्थां करोतु'' इति उक्तवान् ।

तदा मल्लः उच्चैः हसन् - ''चोराः यथा अत्र न आगच्छेयुः तथा रक्षणं करोति सः । एतेन भवतः अपि लाभः एव खलु भविष्यति ?'' इति पृष्टवान् ।

''लाभः भवति वा न वा इति देवः एव जानाति । शुनकभषणकारणतः रात्रौ मया किञ्चिदपि निद्रा एव न प्राप्यते । अतः यदा अपरिचिताः चोराः वा दृश्यन्ते तदा एव भवतः शुनकः भषणं यथा कुर्यात् तथा शिक्षणं ददातु । तथा यदि भवान् न करोति तर्हि तस्य भषणस्य निवारणार्थं मया अन्यः क्रमः आश्रीयते'' इति उक्तवान् नारायणभट्टः ।

तस्य वचनं श्रुत्वा मल्लः उपहासपूर्वकं हसन् - ''मया पाल्यमानः साधारणः गृहरक्षकः शुनकः न । सः मृगयार्थम् उपयुज्यमानः, विशिष्टजातीयः च । सः न केवलं पुरतः आगतस्य मनुष्यस्य, अपि तु उपस्थितस्य सिंहस्यापि कण्ठम् एव

गृह्णाति'' इति वदन् गृहस्य अन्तः गतवान् ।

तदनन्तरम् अपि त्रिचतुराणि दिनानि नारायणभट्टः शुनकस्य भषणं मौनेन सोढवान् । यदा तस्य सहनाशक्तिः सीमाम् अतिक्रम्य गता तदा सः रात्रौ एकं दण्डं गृहीत्वा शुनकस्य समीपं गतवान्, तेन दण्डेन शुनकं बलात् ताडितवान् च ।

वेदनाम् असहमानः सः शुनकः ततः पलायितुं प्रयतमानः क्रन्दनम् अकरोत् । एतत् श्रुत्वा मल्लः द्वारम् उद्घाट्य बहिः आगत्य - 'चिरकालानन्तरं मम शुनकः अद्य चोरं गृहीतवान् अस्ति' इति स्वगतं वदन् नारायणभट्टं ग्रहीतुं गतवान् ।

तदा नारायणभट्टः उक्तवान् - ''भोः, अहं न चोरः, अपि तु नारायणभट्टः अस्मि । कदा भषणीयं, कदा न भषणीयम् इति पाठयितुं शुनकस्य कटेः उपरि दण्डेन ताडितवान् अस्मि'' इति ।

तत् श्रुत्वा क्रुद्धः मल्लः - ''मया पालितं शुनकं भवान् दण्डेन ताडयति किम् ? अहम् एतत् न सहे'' इति उक्तवान् ।

''भवतः शुनकस्य भषणं यथा मया सोढं तथा भवता अपि एतत् सोढव्यम् एव'' इति उक्तवान् नारायणभट्टः ।

''पुनः कदाचित् मम शुनकं यदि भवान् कटौ ताडयिष्यति तर्हि भवतः कटिभङ्गं करिष्यामि'' इति कोपेन उक्तवान् मल्लः ।

''तर्हि अहं तस्य शिरसि ताडयामि'' इति उक्तवान् नारायणभट्टः ।

तत् वचनं श्रुत्वा महता कोपेन मल्लः - ''शुनकस्य शिरसि भवान् ताडयति चेत् अहं भवतः शिरसः भङ्गं करिष्यामि । पादस्य उपरि ताडयति चेत् भवतः पादभङ्गं करिष्यामि'' इति उक्तवान् ।

''एवम् ! शुनकं यस्मिन् अङ्गे अहं ताडयामि तत् मदीयम् अङ्गं भञ्जयति खलु भवान् ? एवं तर्हि इतः परं यदि भवतः शुनकः मम निद्राभङ्गं करिष्यति तर्हि अनुक्षणम् आगत्य अहं तस्य पुच्छस्य मर्दनं करिष्यामि । तदा भवान् किं करिष्यति ?'' इति पृष्ट्वा नारायणभट्टः ततः प्रस्थितवान् ।

मल्लः नारायणभट्टस्य चमत्कारिक-वचनस्य अर्थम् अवगत्य मनसि एव हसन् - 'मम शुनकः इतः परं रात्रौ वृथा भषणं यथा न कुर्यात् तथा शिक्षणं दातव्यम्' इति निर्णीतवान् ।



## समुद्रतीरप्रयाणम् - १८




# चेन्नैमहानगरम्

रचना - मीरा नायर् ◆ चित्राणि - गोपकुमारः

फ्रान्सिस्डेवर्यः सेयूण्ट्जार्जुदुर्गं यदा निर्मितवान् तदा जनाः 'प्राकृतिकनौकास्थानं न एतत्' इति उक्तवन्तः। प्राचीने काले अत्र तीरात् बहु दूरे समुद्रे एव महानौकाः तिष्ठन्ति स्म । ततः नौकाभिः प्लवैः वा जनाः तीरं प्रति नीयन्ते स्म । अनन्तरकाले, तन्नाम १८८१ तम वर्षस्य अनन्तरं, मेरीनासमुद्रतीरस्य उत्तरभागे नौकास्थानं निर्मितम् । इदानीं चेन्नैनगरं अस्माकं देशस्य एकं प्रमुखं नौकास्थानं जातम् अस्ति ।

मेरिनातीरस्य दक्षिणपार्श्वे 'स्यान्थोम् चर्च्' अस्ति । क्रि.श. ५२ तमे वर्षे एव चन्नैनगरम् आगतः क्रैस्तमतप्रचारकः सेयूण्ट्थामस् डिडैमस्महाभागस्य स्मारकस्य उपरि एतत् क्रैस्तमन्दिरं निर्मितम् अस्ति । तस्मिन् मन्दिरे सुन्दरकाचकानाम् उपरि तस्य प्रचारकस्य चरित्रं चित्रितम् अस्ति । स्यान्थोम् समीपे एव अड्यार्नदीतीरे ब्रह्मविद्यासमाजस्य (थियसाफिकल् सोसैटि) प्रधानकार्यालयः अस्ति । एतं समाजं अमेरिकादेशस्य मेडम् ब्लावट्स्कि आरब्धवती । अस्माकं देशस्य स्वातन्त्र्यान्दोलने मुख्यपात्रम् ऊढवती डा॰ अनिबेसेण्ट् एतस्याः संस्थायाः कार्यालयं अड्यारप्रदेशे स्थापितवती । एतस्य

*स्यान्थम्चर्च्*

समाजस्य प्राङ्गणे विद्यमानः ग्रन्थालयः विश्वप्रसिद्धः । पूर्वदेशानां नागरिकतया संस्कृत्या च सम्बद्धाः ६५००० ग्रन्थाः अत्र सन्ति । २०००० ताडपत्रग्रन्थाः अपि सन्ति ।

एतस्य समाजस्य उद्याने सर्वमतसम्बन्धिनः देवालयाः अपि सन्ति । अत्र एव २०० वर्षीयः वटवृक्षः अस्ति । एतस्य छायायां ३००० जनाः स्थातुं शक्नुवन्ति ।



*कलाक्षेत्रस्य सभाभवनम्*

ब्रह्मसमाजस्य समीपे एव सङ्गीतनृत्यविषयेषु विश्वप्रसिद्धं कलाक्षेत्रम् अस्ति । एतत् कलाक्षेत्रं सुप्रसिद्धा ब्रह्मसमाजसदस्या रुक्मिणीदेवी-अरुण्डेल्महाभागा १९३६ वर्षे संस्थापितवती ।

१९३० तमवर्षात् पूर्वं देवालयेषु केवलं देवदास्यः तमिलुनाडुप्रदेशस्य सांस्कृतिकपरम्परायाम् अन्तर्गतस्य भरतनाट्यस्य प्रदर्शनं कुर्वन्ति स्म । उन्नतकुटुम्बस्य बालिकासु कापि एतत् नाट्यं ज्ञातुं न प्रयतते स्म । एतस्य कलाक्षेत्रस्य निर्माणानन्तरं तस्यां भावनायां परिवर्तनं जातम् । सुशिक्षितकुटुम्बानां युवतयः अपि भरतनाट्यस्य अभ्यासम् आरब्धवत्यः । एवं भरतनाट्यस्य गौरवस्थानकल्पने कलाक्षेत्रं प्रमुखपात्रम् अवहत् । एतेन कारणेन इदानीं चेन्नैनगरं भरतनाट्यस्य केन्द्रत्वेन प्रशंसां प्राप्तवत् अस्ति ।

कलाक्षेत्रस्य किञ्चिद्दूरे एव गिण्डिराष्ट्रियोद्यानम् अस्ति । सुन्दरहरिणाः अत्रत्यः आकर्षणबिन्दुः । राजभवनं, इण्डियन् इन्स्टिट्यूट् आफ् टेक्नालजि (ऐ.ऐ.टि.), गिण्डि इञ्जिनियरिङ्ग् महाविद्यालयः (भारते एव प्रसिद्धा तान्त्रिकमहासंस्था) च अत्र सन्ति । एतस्य उद्यानस्य पार्श्वे एव मद्रास्सर्पोद्यानम् अस्ति । अमेरिकासञ्जातः भारतनिवासी रोमुलस् विटाकर्महाभागेन एतत् निर्मितम् अस्ति । सर्वविधसर्पाः अपि अत्र द्रष्टुं शक्याः ।

पुराणप्रसिद्धाः बहवः देवालयाः चेन्नैनगरे सन्ति । तेषु प्रमुखः मैलापुरे विद्यमानः कपालीश्वरदेवालयः, ट्रिप्लिकेन्नगरे विद्यमानः पार्थसारथिदेवालयः च । एकदा कैलासे शिवपार्वत्योः सम्भाषणं प्रचलति स्म । तदा पार्वती अन्यमनस्का इव दृष्टा । एतेन कुपितः शिवः तां 'मयूरी भव' इति शप्तवान् ।

पार्वती मयूरीरूपेण एव तावत् तपः कृतवती, यावत् पूर्वरूपं प्राप्तवतीं ताम् ईश्वरः न परिगृहीतवान् । तमिलुभाषया मयूरः 'मयिल्' इति उच्यते । तया यत्र तपः कृतं तत् स्थलम् 'मैलापूर' इति नाम प्राप्नोत्

इति पुराणकथातः ज्ञायते ।

मैलापुरे कपालीश्वर-देवस्थाननामकः शिवालयः अस्ति । तस्य अन्तः अङ्गणे 'कर्पगम्बाल्'देवालयः, पुन्नागवृक्षस्य अधः मयूरीरूपेण स्थितायाः पार्वत्याः देवालयः च अस्ति । एषः पुन्नागवृक्षः अतिपुरातनः इति कथ्यते ।



*श्री पार्थसारथिदेवालयः*

चन्नैनगरे एव अतिपुरातनं युरोपियन् - चर्च् इति प्रसिद्धिं गतं लझ् चर्च् कपालीश्वर-देवस्थानस्य किञ्चिद्दूरे एव अस्ति । १५४७-१५८२ वर्षयोः मध्यकाले पोर्चुगीस्जनाः 'अवर् लेडि आफ् लैट्'गौरवार्यम् एतत् चर्च् निर्मितवन्तः । यदा पोर्चुगीस्जनानां नौका जले निमज्जिता आसीत् तस्मिन् कष्टकाले दूरे प्रकाशः तैः दृष्टः । ते तस्यां दिशि एव एव प्रयाणं कृत्वा सकुशलं तीरं प्राप्तवन्तः । यदा ते तीरं प्राप्तवन्तः तदा प्रकाशः अदृश्यः जातः । यस्मिन् स्थले ते प्रकाशं दृष्टवन्तः तत्र एव नाविकाः कृतज्ञतया तत् चर्च् निर्मितवन्तः इति श्रूयते ।

तिरुवल्लिक्केणि (ट्रिप्लिकेन्)प्रदेशस्य १४०० वर्षाणाम् इतिहासः अस्ति । एतत् एकं वैष्णवक्षेत्रम् । अत्र विद्यमाने सरोवरे सुन्दराणि कुमुदपुष्पाणि सन्ति इति कारणतः एतस्य प्रदेशस्य 'तिरुवल्लिक्केणि' (कुमुदसरोवरम्) इति अन्वर्थं नाम आगतम् अस्ति । अत्र प्रख्यातस्य पार्थसारथेः श्रीकृष्णस्य देवालयः अस्ति ।

धर्मार्थकामरूपान् त्रीन् पुरुषार्थान् अधिकृत्य बहूनि तत्त्वानि नीतीः च बोधयति सुप्रसिद्धः तमिलुग्रन्थः 'तिरुक्कुरळ्' । एतं ग्रन्थं प्रथमशतके तिरुवल्लुवर्महोदयः रचितवान् । एतस्य नाम्ना एव निर्मितं 'वल्लुवर् कोट्टं'नामकं स्थलं नुङ्गम्बाकंपरिसरे अस्ति । एतस्मिन् तिरुक्कुरळ्ग्रन्थे विद्यमानाः १२२० द्विपदयः पुस्तकाकारेण विद्यमानेषु अमृतशिलाफलकेषु चित्रिताः सन्ति अत्र ।

विशालस्य सभामण्डपस्य उत्तरभागे ३३ मीटर्-उन्नते शिलारथे गाम्भीर्येण उपविष्टवतः तिरुवल्लुवरवर्यस्य विग्रहः निर्मितः अस्ति । रथम् आकर्षन्तौ द्वौ गजौ अपि अत्र चित्रितौ स्तः । एशियाखण्डे एव एषः वल्लुवर्कोट्टंसभामण्डपः बृहत् इति कथ्यते, यत्र च ४००० जनाः उपवेष्टुं शक्नुवन्ति ।

अण्णामार्ग - (मौण्टरोड्)पीटर्स्मार्गयोः मेलनस्थले एतस्य नगरस्य अन्यतमः मुख्यः यवनप्रार्थनालयः 'थौसण्ड् लैट्स् मास्क्' विद्यते । अत्र सहस्रं मृद्दीपान् ज्वालयन्ति स्म इति कारणतः एतस्य 'सहस्रदीपानां प्रार्थनालयः' इति नाम प्रसिद्धम् अभवत् ।

दक्षिणभारतस्य हालिवुड् इति प्रसिद्धिं गतं कोडम्बाकनामकं स्थलं चित्रानिर्माणकेन्द्रम् जातम् अस्ति । बहूनां दाक्षिणात्यभाषाणां चित्रनिर्माणम् अत्र एव प्रचलति ।



तिरुक्कुरळ्कर्ता तिरुवळ्ळुवर्

पेरम्बूर्प्रदेशः अद्य उद्यमकेन्द्रत्वेन अभिवृद्धिं गच्छन् अस्ति । देशे एव सुप्रसिद्धं धूमशकट-प्रकोष्ठानाम् उत्पादनकेन्द्रं-'इण्टेग्रल् कोच् फ्याक्टरी' पेरम्बूरप्रदेशे एव अस्ति । अत्र विद्यमानः रेल्वे-चिकित्सालयः हृदयशास्त्र-चिकित्सार्थं प्रसिद्धः अस्ति । पेरम्बूरुसमीपे एव काशीविश्वनाथस्य देवालयः अस्ति । प्रतिवर्षमपि तिरुपतिवेङ्कटेश्वरस्वामिने समर्पयितुं छत्राणि शोभायात्रया चेन्नैनगरतः एव नीयन्ते । तथा गमनसमये अत्रत्ये काशीविश्वनाथ-देवालये रात्रौ उषित्वा प्रयाणम् अनुवर्त्यते प्रतिवर्षम् अपि ।

एतस्य देवस्थानस्य समीपे एव टाकर्स्धर्मशाला अस्ति । १७६० तमे वर्षे 'टाकर्स्'नामकः गुजरातिपरिवारः चेन्नै नगरम् आगतः । स च परिवारः आभरणवाणिज्ये सुनिपुणः आसीत् । तस्मिन् वाणिज्ये प्राप्तेन लाभेन १८०४ वर्षे उभयोः महिलयोः साहाय्येन एतत् देवस्थानं निर्मितम् ।





वळ्ळुवर्कोट्टम्



# अनुरूपा पत्नी

महापुरग्रामे महादेवः नाम कृषिकस्य पुत्रः आसीत् । सः कृषिकार्ये पितुः साहाय्यम् अकुर्वन् सर्वदा 'राजकुमारी परिणेतव्या' इति दिवास्वप्नं पश्यति स्म । एतत् सर्वदा दृष्ट्वा अत्यन्तम् असन्तुष्टः तस्य पिता तं गृहात् निष्कासितवान् ।

महादेवः तं शुभसङ्केतं मत्वा साक्षात् राजधानीं गत्वा मातुलस्य सिद्धरामस्य गृहं प्रविष्टवान् । सिद्धरामः पूर्वं सैनिकरूपेण कार्यं कुर्वन् स्वधैर्यसाहसकारणतः राजतः पारितोषिकादिकं प्राप्तवान् आसीत् । इदानीं सिद्धरामस्य पुत्री मल्लिका राजकुमार्याः प्रियंवदायाः मुख्यसखी आसीत् ।

सुलक्षणोपेतं दृढकायं महादेवं दृष्ट्वा सिद्धरामः बहु सन्तुष्टः जातः । 'एतादृशस्य कृते राजास्थाने कार्यस्य दापनं न क्लेशाय । गच्छता कालेन पुत्र्या मल्लिकया सह एतस्य विवाहं कृत्वा स्वगृहे एव वासं कारयितुं शक्येत' इति चिन्तितवान् सः ।

अनन्तरदिने सः स्वचिन्तनं महादेवं निवेदितवान् । राजास्थाने उद्योगप्राप्ति-प्रस्तावः तु महादेवाय नितराम् अरोचत । किन्तु सिद्धरामस्य पुत्र्याः मल्लिकायाः परिणयः तस्य प्रियः न आसीत् ।

'यदि मम आशयम् इदानीम् एव प्रकाशयेयं तर्हि राजास्थानस्य प्रवेशः एव न भवेत् । अतः आदौ राजास्थानप्रवेशः भवतु । ततः यथोचितं चिन्तयितुं शक्यते' इति निर्णीय सः 'अस्तु' इति उक्तवान् ।

सिद्धरामः महादेवाय सैनिककार्यं दापयितुम् इष्टवान् । किन्तु एतत् न अङ्गीकृतवान् महादेवः । 'खड्गं खेटकादिकं च गृहीत्वा ग्रामात् बहिः गत्वा शैल-वनप्रदेशेषु अटितुम् अहं न इच्छामि' इति उक्तवान् सः । ''एवं तर्हि रात्रौ नगरस्य रक्षणं कुर्वन् भटरूपेण कार्यं करोतु'' इति



उक्तवान् सिद्धरामः । महादेवः एतदपि निराकुर्वन् - "रात्रौ दण्डं गृहीत्वा वीथिकासु भ्रमणम् अहं न इच्छामि । एतत् मम अगौरवाय भवति" इति उक्तवान् ।

एतानि वचनानि श्रुत्वा मल्लिका तम् अपृष्ट्वा एव रात्रौ घण्टावादनकार्यं तस्मै दापितवती । प्रतिदिनं रात्रौ तेन प्रतियामं यामसूचकः घण्टानादः करणीयः आसीत् ।

कार्यार्थं गच्छतः तस्य मासः अतीतः चेदपि तेन राजकुमार्याः दर्शनं न प्राप्तम् । राजकुमारीदर्शनकुतूहलं निरोद्धुम् अशक्नुवन् सः तस्मिन् परिसरे वाटिकाकार्यं निर्वहन्तं वृद्धं - "राजकुमारी एतेन मार्गेण कदा आगमिष्यति ?" इति पृष्टवान् ।

तदा वृद्धः हसन् - "राजकुमार्याः अत्र आगमनस्य अवश्यकता का ? सा दूरे स्थितायाः उन्नतायाः भित्तेः अन्यस्मिन् पार्श्वे विद्यमानायां वाटिकायां स्वसखीभिः सह विहरति । तत्रैव विद्यमाने तटाके जलक्रीडां करोति । अनन्तरम् अन्तःपुरं प्रतिगच्छति । तथापि राजकुमारी द्रष्टव्या एव इति अस्ति चेत् द्वित्रान् मासान् यावत् निरीक्षां करोतु । महाराजः तस्याः विवाहार्थं वरान्वेषणं कुर्वन् अस्ति । विवाहदिने वयं सर्वे तां द्रष्टुं शक्नुयाम" इति उक्तवान् ।

राजकुमार्याः कृते वरान्वेषणं प्रचलति इति श्रुतवतः महादेवस्य हृदये महती वेदना उत्पन्ना । इतोऽपि विलम्बः क्रियते चेत् तां प्राप्तुं न शक्यते इति मत्वा सः एकम् उपायं चिन्तितवान् । तदनुसारं सः अनन्तरदिने सायङ्काले, या दासी राजकुमार्याः कृते पुष्पाणि नयति स्म तया सह सम्भाषणं कुर्वन् एकं पत्रं तस्याः कण्डोले स्थापितवान् । दासी एतत् न ज्ञातवती ।

तस्मिन् सः लिखितवान् आसीत् - *"भवत्याः कृते एव अहं दशयोजनदूरे स्थितात् ग्रामात् आगतवान् अस्मि । एतदर्थम् अहं घोरं वनं नदीं च अतिक्रम्य शैलमार्गेण सञ्चरन् बहुधा कष्टम् अनुभूतवान् अस्मि । एतत्सर्वं भवत्याः कृते एव । इदानीं रात्रौ घण्टावादनकार्यमपि भवत्याः कृते एव कुर्वन् अस्मि ।*

*- महापुरस्य महादेवः"* इति ।

परन्तु दासी यदा पुष्पकण्डोलं स्वीकृत्य गतवती तदनन्तरम् अनेकविधभयैः सः ग्रस्तः अभवत् । 'यदि राज्ञः कोपः भवति तर्हि सः कठोरदण्डनं ददाति इति सर्वे प्रासादस्य कर्मकराः वदन्तः भवन्ति

सदापि । मम दुरदृष्टवशात् यदि राजकुमारी मया लिखितं पत्रं राज्ञे दर्शयेत् तर्हि मम परिस्थितिः का स्यात् इति न ज्ञायते' इति चिन्तयन् सः भीतः जातः । 'स्वेन कृतेन कार्येण कष्टम् अधिकं जातं किल' इति चिन्ताक्रान्तः अपि जातः सः । एतस्मात् सः तस्यां रात्रौ उन्मत्तः इव अभवत् ।

तस्यां रात्रौ महादेवः प्रथमयामे घण्टानादं न कृतवान् एव । द्वितीययामे युगपत् त्रिवारं घण्टानादं कृतवान् ।

त्रिवारं घण्टानादं श्रुतवतः राज्ञः जागरणम् अभवत् । अनुक्षणं सः उत्थाय हंसतूलिकातल्पे उपविष्टवान् । प्रतिदिनं तृतीये यामे राजा उत्तिष्ठति स्म । 'दासीजनाः मां किमर्थं न उत्थापितवन्तः ?' इति आश्चर्यम् अनुभवन् सः कोपेन करताडनं कृतवान् ।

करताडनं श्रुत्वा अनुक्षणम् आगतवतीः दासीः सः कोपेन निन्दितवान् । अनन्तरं नित्यकर्माणि समाप्य यदा उपाहारार्थं गतवान् तदा पाकशालायाम् अन्धकारः आसीत् । किमर्थम् एवम् इति चिन्तयन् उपविष्टवान् राजा । परन्तु समयः जातः चेत् अपि चतुर्थघण्टानादः न श्रुतः । तदा सः भटान् आहूय विचारितवान् । तदा ज्ञातं यत् तृतीययामः एव इतोऽपि न समाप्तः इति । एतत् ज्ञात्वा नितरां कुपितः राजा तत्क्षणे एव महादेवम् आह्वातुं भटान् प्रेषितवान् ।

राज्ञः आह्वानं ज्ञात्वा महादेवः 'चिटिकायाः विषयं राजा ज्ञातवान् अस्ति । इदानीं शूलारोपणम् अन्यघोरदण्डनं वा मम भविष्यति एव' इति चिन्तयन् ततः पलायनं



कर्तुम् इतस्ततः दृष्टवान् ।

परन्तु शूलायुधं गृहीतवन्तः भटाः एतम् एव तदेकदृष्ट्या पश्यन्तः आसन् । अतः महादेवः अनन्यगतिकतया भटैः सह गतवान् ।

महादेवं दृष्ट्वा राजा क्रोधेन - ''प्रतियामं भवता एव रात्रौ घण्टानादः क्रियते किम् ?'' इति पृष्टवान् ।

भयेन महादेवस्य मुखतः स्वरः एव न आगतः । सः अङ्गीकारपूर्वकं शिरः चालितवान् ।

एतत् दृष्ट्वा राज्ञः मनसि करुणा उत्पन्ना । सः मृदुस्वरेण - ''कतिदिनेभ्यः भवान् एतत् कार्यं कुर्वन् अस्ति ?'' इति पृष्टवान् ।

''महाराज ! द्वितीयः मासः समाप्तप्रायः'' इति उक्तवान् महादेवः ।

राजा तं परीक्षादृष्ट्या दृष्ट्वा - ''भवान्

आजानुबाहुः दृढकायः च अस्ति । भवान् सैनिककार्ये योजनीयः आसीत् । परन्तु भवते घण्टानादकार्यं कः दत्तवान् इति न जाने । अस्तु, सप्ताहं यावत् जागरूकतया एतत् एव कार्यं करोतु । अनन्तरं सैन्ये भवन्तं योजयिष्यामि । भवान् खड्गं गृहीत्वा एकत्र तिष्ठति चेदेव शत्रवः धावन्ति'' इति उक्तवान् हसन् ।

महादेवः राजानं नमस्कृत्य - 'अहो ! देवो दयालुः' इति स्वगतं वदन् ततः प्रस्थितः । तथापि राजा कदाचित् पत्रविषयं ज्ञात्वा मह्यं दण्डनं दद्यात् इति भयं तु तस्य मनसि आसीत् एव ।

सः शिरः अवनमय्य दुर्गस्य द्वारसमीपे यदा गच्छन् आसीत् तदा मल्लिका तस्य पुरतः आगत्य - ''आर्य ! भवान् यदा स्वस्य कुग्रामं त्यक्त्वा अत्र आगतः तदा एव मया ज्ञातं यत् मदर्थम् एव भवान् आगतवान् इति । भवतः मनसः भावं प्रदर्शयितुं पुष्पकण्डोलस्य आवश्यकता आसीत् वा ? पुष्पहारेण राजकुमार्याः अलङ्कारः मया एव क्रियते इति कारणतः तत् पत्रं मया प्राप्तम् । यदि तत् पत्रं राजकुमारी प्राप्तवती स्यात् तर्हि सा - 'एतत् मह्यम् एव लिखितम्' इति मत्वा भवते दण्डनम् अदास्यत् । मम पिता अचिरात् एव आवयोः विवाहं कर्तुं प्रयत्नं कुर्वन् अस्ति । एवं स्थिते अपि कः सङ्कोचः भवतः ? पत्रे अपि मम नाम लेखितुं सङ्कोचः भवतः ! एतस्मात् भवान् स्वस्य ग्रामीणत्वं एव प्रमाणीकृतवान्, तावदेव'' इति हसन्ती उक्त्वा अन्तःपुरं प्रति धावितवती ।

मल्लिकायाः वचनं श्रुत्वा - 'अहो, दैवात् अहं रक्षितः' इति स्वगतं वदन् दीर्घं निःश्वसितवान् महादेवः । 'अविचिन्त्य कृतस्य व्यवहारस्य परिणामतः महान् अपायः आपतिष्यत् । किन्तु सौभाग्यवशात् स च अपगतः । मादृशाः सामान्याः आकाशस्थानि नक्षत्राणि प्राप्तुं प्रयत्नं न कुर्युः । दिनद्वयं मया महत् कष्टम् अनुभूतम् । यदि मल्लिका न स्यात् तर्हि प्रायः मम मरणदण्डनम् एव अभविष्यत् । अलं राजकुमार्याः परिणयचिन्तनेन । मल्लिका सुन्दरी चतुरा च अस्ति । सा एव मम अनुरूपा पत्नी' इति निर्णीतवान् महादेवः ।



चन्दमामायाः

# सुवर्ण-समयः - १२





**१... भूमध्यरेखायाः समीपे ये निवसन्ति तान् पेंग्विन्पक्षिणः ?**
प्रपञ्चे एतस्मिन् एव द्वीपपरिसरे उष्णवलयवासिनः कूर्माः, राक्षसगोधिकाः, पेंग्विन्पक्षिणः च सहजीवनं कुर्वन्ति ।

## प्रपञ्चे एतान् वयं कुत्र द्रष्टुं शक्नुयाम ?

**२... यः अतिलघुदेशः तम् ?**
एषः अर्ध च. कि. मी.-विस्तारयुक्तः सहस्रजनैः युतः अतिलघुदेशः । १९२९ तमे वर्षे एतेन स्वीयः राष्ट्रध्वजः, मूल्याङ्कः, राष्ट्रियगीतं च प्राप्तम् ।



**३... अत्युन्नतस्थले स्थितं सरोवरम् ?**
समुद्रस्तरात् ३८११ कि.मी. उन्नते स्थले स्थितस्य टिटिकाकासरोवरस्य दैर्घ्यं १९० कि.मी., गभीरता २७५ मी., विस्तारः च ९०६५ कि.मी. अस्ति ।



**४... अतिविशालां दीर्घसेतुम् ?**
एषा सेतुः 'ओल्ड्कोट् ह्यांगर्' इति नाम्ना निर्दिश्यते । १९३२ तमे वर्षे एतस्याः उपरि सञ्चारः आरब्धः । ४८.८ मीटर्विस्तारयुतायाः एतस्याः सेतोः उपरि युगपत् एव ८ वाहनानि सञ्चारं कर्तुम् अर्हन्ति ।





**५... यत्र मूषकाः पूज्यन्ते तं च देवालयम् ?**
श्वेतशिलाभिः निर्मिते एतस्मिन् कार्निमातृदेवालये मूषकाः भक्त्या पूज्यन्ते, आहाररक्षणादिदानेन ते पोष्यन्ते च ।

## कथा समस्या

डेनियल्डीपोवर्येण लिखितात् राबिन्सन्क्रूसोनामकात् कथाग्रन्थात् एषः भागः उद्धृतः अस्ति । अत्र दत्ते अनुच्छेदे कश्चन दोषः अस्ति । सः कः इति किं ज्ञातुं शक्नुवन्ति भवन्तः ?



''मध्याह्नसमये समुद्रः शान्तः आसीत् । परिसरः उष्णः आसीत् इत्यतः अहं वस्त्राणि अपनीय जले अवतीर्णवान् । सुदीर्घकालानन्तरम् अहं नौकासमीपम् आगतवान् । 'नौकायाः आरोहणं कथम्?' इति अनवगच्छन् अहं क्षणकालं दिग्भ्रान्तः । नौकातः बहिः आगता लम्बमाना रज्जुः अत्रान्तरे मया दृष्टा । तस्याः साहाय्येन अहं नौकाम् आरूढवान् । नौकायाम् आहारवस्तूनि आसन् । तानि जलेन आर्द्राणि यथा न स्युः तथा परिरक्षितानि आसन् । अतः तेषां प्रत्यग्रता आसीत् । अहम् आहारप्रकोष्ठं गत्वा बिस्कत्खाद्यानि स्वीकृत्य कोषे स्थपयित्वा बहिः आगत्य आतृप्ति खादितवान् ।''

## करणात् ज्ञायताम्

# पक्षिणं बध्नन्तु

दृढपत्रस्य ४×४ सें.मी. विस्तृतं चतुरस्राकारकं भागं प्राप्नुवन्तु ।

दृढपत्रस्य उभयोः अपि पार्श्वयोः वलयकारेण सूत्रस्य बन्धनं कुर्वन्तु ।

दृढपत्रस्य एकस्मिन् पार्श्वे पक्षिणम्, अपरस्मिन् पार्श्वे नीडं च चित्रयन्तु ।

ततः वलयाकारकं सूत्रम् उभयपार्श्वतः अपि आकर्षन्तः दृढपत्रं वेगेन वर्तयन्तु । एवं वर्तनसमये पक्षी नीडे बद्धः इव दृश्यते !





# विनोदप्रश्नाः

१. अश्वः षड्भिः पादैः युक्तः कदा भवति ?

२. मूषक-गजयोः भारः कदा समानः भवितुम् अर्हति ?



३. **९+९+९+१+१** - एतासां सङ्ख्यानां सङ्कलनात् '२०' इति उत्तरं कथं प्राप्तुं शक्यम् ?

४. अहं मम मित्रस्य गृहं गतवान् आसम् । ततः प्रस्थानसमये मित्रस्य अनुजः आगत्य - ''लघुमार्गेण भवान् मा गच्छतु । तत्र कश्चन सर्पः सुप्तः अस्ति । सः विषसर्पः इव भाति'' इति उक्तवान् । ''भवान् तेन एव खलु मार्गेण आगतवान् ?'' इति अहं पृष्टवान् । ''आम् । किन्तु मम आगमनसमये सः नेत्रे निमील्य निद्रां करोति स्म । इदानीं जागरितः स्यात् सः'' इति उक्तवान् सः । विनोदार्थम् एषः एवं वदन् अस्ति इति भावयित्वा अहं तेन लघुमार्गेण एव गृहं गतवान् । मध्येमार्गं मया कोऽपि सर्पः न दृष्टः एव । मित्रस्य अनुजः असत्यम् उक्तवान् इति अहं कथं ज्ञातवान् ?



५. गजः कदा अष्टाभिः पादैः युक्तः भवति ?

६. सः प्राणी कः, यश्च करद्वयेन युक्तः सन् अपि मुखं क्षालयितुं न शक्नोति ?



७. कण्ठयुक्तः अपि कः गिलनं कर्तुं न शक्नोति ?

८. युद्धस्य कारणतः कर्तितहस्तः कश्चन फ्रेञ्च्सैनिकः नेपोलियन् बोनापार्टसमीपं गतवान् । तस्य साहसं प्रशंसन् नेपोलियनः पदकं यच्छन् उक्तवान् - ''भवान् हस्त हीनः अभवत् यत् तदर्थम् एतत्'' इति ।

''यदि अहम् अन्येन हस्तेन अपि हीनः स्यां तर्हि भवान् कीदृशं पारितोषिकम् अदास्यत् ?'' इति पृष्टवान् सैनिकः ।

''भवन्तम् उच्चाधिकारिणम् अकरिष्यम्''



इति उक्तवान् नेपोलियनः ।

सः सैनिकः झटिति खड्गम् आकृष्य स्वस्य द्वितीयं हस्तम् अपि कर्तितवान् ।

एषा घटना मिथ्या इति ज्ञातं स्यात् खलु भवद्भिः ? एतस्याः मिथ्यात्वं कथं ज्ञातम् ?

## ध्रुवनिवासिनः चित्रं लिखन्तु भवन्तः ।

'3' इत्येतां सङ्ख्यां काभिश्चित् रेखाभिः परिष्कुर्मः चेत् ध्रुवनिवासी प्राप्यते ।







'8' इत्येतां सङ्ख्यां चलत्कृमिरूपेण परिवर्तयितुं शक्नुमः ।







# सुवर्णसमयप्रश्नावल्याः (११) उत्तराणि

### प्रपञ्चे कुत्र ?

१. इण्डोनेशियादेशे मध्यजावाप्रदेशे ।
२. अमेरिकादेशस्य क्यालिफोर्नियाप्रदेशस्य श्वेतपर्वतेषु ।
३. लण्डन्नगरस्य थेम्स्नद्याः तीरे ।
४. इटलीदेशस्य वेनिस्नगरे ।

### चित्रसमस्या

कोलम्बस्नौकायां नक्षत्रैः रेखाभिः च युक्तः अमेरिकादेशस्य ध्वजः दृश्यते ।

### चित्रीयाः प्रश्नाः

१. २५ त्रिकोणानि ।
३. एतेभ्यः सर्वेभ्यः अपि ।

२ 

### विनोदप्रश्नाः

१. वायुरहितं चक्रं तस्य यानस्य 'डिक्कि'भागे आसीत् ।
२. शृङ्खलायाः अपरम् अन्तं कुत्रापि न बद्धम् अस्ति इत्यतः ।
३. काचकस्थजलनिवारकस्य उपयोगः एकत्र एव कृतः दृष्टः तेन ।
४. अन्धः दृष्टिहीनः भवति, न तु वचनहीनः । सः 'क्रकचं ददातु' इति पृष्टवान् ।



# महाभारतम्

अतिथिरूपेण आगतस्य दूर्वाससः तच्छिष्याणां च सत्कारः एतस्मिन् असमये कथं करणीयः इति अजानती द्रौपदी कृष्णं प्रार्थितवती । तत्समनन्तरम् एव कृष्णः तत्र प्रत्यक्षः जातः । तं प्रणम्य उक्तवती द्रौपदी - "दूर्वासाः शिष्यगणेन सह स्नानार्थं गङ्गानदीं गतवान् अस्ति । तस्य प्रत्यागमनसमये पाकः अत्र सिद्धः स्यात् । इदानीं किं करणीयं मया ? अक्षयपात्रे तु अन्नस्य एकः कणः अपि नास्ति" इति ।

"दूर्वाससः सत्कारस्य प्रस्तावः दूरे तिष्ठतु नाम । मम बुभुक्षां प्रथमं निवारयतु भवती" इति उक्तवान् कृष्णः ।

तदा द्रौपदी उक्तवती - "यावत् मम भोजनं न समाप्यते तावत् एव अक्षयपात्रे अन्नं भविष्यति । अद्य मम भोजनं समाप्तम् । इदानीं भवान् एव मां परीक्षते चेत् मया किं वा करणीयम् ?" इति ।

"अहं नितरां बुभुक्षितः अस्मि । भवती तु माम् उपहसति । भवत्याः अक्षयपात्रे यावत् अस्ति तावत् एव पर्याप्तं मम । भवती तत् अक्षयपात्रम् अत्र आनयतु तावत्" इति उक्तवान् कृष्णः ।

द्रौपदी अन्तः गत्वा अक्षयपात्रम् आनीतवती । तस्य तलभागे कोणे कुत्रापि एकः पुलाकः कथञ्चित् अवशिष्टः आसीत् । तं पुलाकं स्वीकृत्य मुखे स्थापयित्वा कृष्णः उक्तवान् - "मम उदरं पूर्णम्" इति ।

अनन्तरं सः भीमम् आहूय - "भवान् गङ्गातीरं गत्वा दूर्वाससं तच्छिष्यान् च निवेदयतु यत् शीघ्रं भोजनार्थम् आगन्तव्यम् इति" इति सूचितवान् ।

भीमस्य आगमनात् पूर्वम् एव दूर्वाससः तच्छिष्याणां च उदरं पूर्णं जातम् आसीत् । तृप्तिसूचकम् उद्गिरणं मुखात् निर्गच्छत्



आसीत् । अतः शिष्याः दूर्वाससम् उक्तवन्तः - "आर्य ! आकण्ठं भुक्तम् इव अनुभवः अस्माकम् । 'भोजनं सज्जीकरोतु' इति वयं धर्मराजम् उक्तवन्तः स्मः अपि । इदानीम् एकं कणं सेवितुम् अपि न शक्नुमः वयम् । किं करणीयम् इदानीम् ?" इति ।

तदा दूर्वासाः उक्तवान् - "धर्मराजविषये अन्याय्यम् आचरितम् अस्माभिः । सः यदि कोपेन अस्मान् पश्येत् तर्हि वयं सर्वे भस्मीभूताः स्याम । पूर्वम् अम्बरीशप्रसङ्गे मया एतादृशः एव अनुभवः प्राप्तः आसीत् । इदानीम् अस्माकं न अन्या गतिः, पलायनात् ऋते । अतः कमपि अनुक्त्वा इतः निर्गच्छाम तावत्" इति ।

पूर्वं कदाचित् एकादशीव्रतं समाप्य अम्बरीशः ब्राह्मणैः सह यदा भोजनार्थम् उपवेष्टुम् उद्युक्तः तदा तत्र दूर्वासाः आगतवान् आसीत् । अम्बरीशः विनयेन तं निवेदितवान् - 'पारणार्थं भवता आगन्तव्यम्' इति । स्नानार्थं गतः दूर्वासाः दीर्घकालानन्तरम् अपि न आगतः । द्वादशी समाप्तप्राया जाता । द्वादश्याः समाप्तेः अनन्तरं पारणा कृता चेत् व्रताचरणं निष्फलं भवति । अतिथेः आगमनात् पूर्वं भोजनं तु पापकरम् । अतः अम्बरीशः जलपानेन पारणां कृतवान् । विलम्बेन आगतः दूर्वासाः अम्बरीशस्य जलपानवार्तां श्रुत्वा कुपितः सन् महाकृत्यां सृष्ट्वा अम्बरीशस्य ग्रहणार्थं प्रेषितवान् आसीत् । अत्रान्तरे विष्णोः चक्रं तत्र आगत्य महाकृत्यां संहृत्य दूर्वाससम् अनुसृत्य आगच्छत् । आत्मरक्षणार्थं ततः धावितवान् दूर्वासाः शिवं विष्णुं चापि शरणं गत्वा अपि प्रयोजनं किमपि अप्राप्य अम्बरीशम् एव शरणं गत्वा क्षमां याचित्वा प्राणान् रक्षितवान् आसीत् । सा घटना सर्वदा दूर्वाससः स्मृतिपथे भवति स्म ।

भीमः यदा गङ्गातीरम् आगतः तदा तत्र कोऽपि न आसीत् । यदा सः एतद्विषये तत्रत्यान् पृष्टवान् तदा ते उक्तवन्तः - 'ऋषयः पलायिताः' इति । भीमः आश्रमं प्रतिगत्य प्रवृत्तं समग्रं निवेदितवान् । 'दूर्वासाः पुनरपि शिष्यैः सह आगत्य पीडां जनयेत्' इति भीतिः प्राप्ता धर्मराजेन ।

तदा कृष्णः - 'दूर्वासाः इतः परं न आगमिष्यति' इति उक्त्वा प्रवृत्तं सर्वं निवेद्य सर्वेषाम् अनुज्ञां प्राप्य द्वारकां प्रति गतवान् । एवं दुर्योधनादिभिः उत्पादितात् कष्टात्

कृष्णस्य अनुग्रहस्य कारणतः पाण्डवाः रक्षिताः अभवन् ।

पुनः कश्चन कालः अतीतः । काम्यकवने वसन्तः पाण्डवाः कदाचित् निर्णीतवन्तः यत् कदाचित् मृगयाविहारः करणीयः इति । अतः ते द्रौपदीं तृणबिन्दुमुनेः आश्रमे स्थापयित्वा तस्याः रक्षणार्थं धौम्यं नियोज्य मृगयार्थं गतवन्तः । तस्मिन् एव दिने सैन्धवः साल्वराजकुमारीं परिणेतुम् इच्छन् सैन्येन, कैश्चित् राजभिः च सह प्रस्थाय तृणबिन्दोः आश्रमस्य मार्गेण गच्छन् आसीत् । आश्रमः निर्जनः आसीत् । पार्श्वस्थे लतागृहे द्रौपदी प्रकाशमाना देवता इव स्थिता आसीत् । सैन्धवः तां दृष्टवान् ।

दर्शनमात्रेण सैन्धवे मदनविकाराः उत्पन्नाः । युक्तायुक्तविवेकतः वञ्चितः अभवत् सः । सः कोटिकास्यनामकं राजकुमारम् आहूय उक्तवान् - ''दृष्टा खलु भवता सा सौन्दर्यखनी ? दर्शनमात्रेण अहं तस्याम् अनुरक्तः जातः । एषा का, कस्याः पुत्री इति मया ज्ञातव्यम् । एषा कस्यचित् पत्नी अपि भवेत् नाम । एषा एव मह्यम् आवश्यकी । अतः भवान् तस्याः समीपं गत्वा 'मया सह आगच्छति वा न वा' इति विचार्य आगच्छतु'' इति ।

कोटिकास्यः अपि अविवेकी एव आसीत् । सः द्रौपद्याः समीपं गत्वा - ''सुन्दरि ! का भवती ? वनदेवता इव शोभमानायाः भवत्याः स्वामी कः ? किं कुलं भवत्याः ? किं भवत्याः नाम ? किमर्थम् एतस्मिन् वने एकाकिनी तिष्ठति भवती ? मम नाम कोटिकास्यः इति । सुरथराजकुमारः अहम् । तत्र भवतीम् अनुरागेण निर्मिमेषं यः पश्यति सः तरुणः अस्ति सुबलराजः । प्रकाशमाने रथे उपविष्टः अन्यराजैः परिवृतः सः





सिन्धुसौवीरादि-देशानाम् अपि राजा अस्ति । तस्य नाम जयद्रथः इति । भवत्याः पूर्वापरं विचारयितुम् इच्छन् सः जयद्रथः मां प्रेषितवान् अस्ति'' इति उक्तवान् ।

तदा द्रौपदी उक्तवती - ''भवान् कः, कीदृशः इति अहं जानामि । मानिन्या सत्कुलजातया मया वस्तुतः भवता सह वार्तालापः न करणीयः । किन्तु किं करवाणि, भवतः प्रश्नानाम् उत्तरं वक्तुम् अत्र अन्यः कोऽपि नास्ति । अतः अनन्यगतिकतया अहम् एव वदामि । अहं द्रुपदराजस्य पुत्री । कृष्णा इति मम नाम । पाण्डवाः मम पतयः । ते इदानीं मृगयार्थं गताः सन्ति । अचिरात् एव प्रत्यागच्छेयुः ते । यदि भवन्तः तेषाम् आतिथ्यं प्राप्नुयुः तर्हि ते सन्तुष्टाः भवेयुः'' इति ।

कोटिकास्यः सैन्धवसमीपं गत्वा सर्वं निवेदितवान् ।

''असामान्या सुन्दरी सा । याभ्यां नेत्राभ्यां सा दृश्यते ताभ्याम् एव अन्या सर्वथा द्रष्टुं न शक्या'' इति वदन् सैन्धवः रथात् अवतीर्णः ।

आत्मीयैः राजकुमारैः सह पाण्डवानां पर्णशालां गत्वा सः द्रौपदीम् उद्दिश्य - ''अपि कुशलिनी भवती ? भवत्याः पतयः किं कुशलिनः ?'' इति पृष्टवान् ।

तदा द्रौपदी 'सर्वं कुशलम्' इति उक्त्वा तेषाम् अपि योगक्षेमादिकं विचार्य अर्घ्यपाद्यादिकं दत्त्वा सत्कृत्य - ''मृगयार्थं गताः पाण्डवाः अचिरात् एव प्रत्यागच्छेयुः । मृगयया प्राप्तेन मांसेन एव भवतः सर्वान् सत्कुर्युः'' इति उक्तवती ।

''किम् आतिथ्येन ? अहं भवतीम् एव इच्छामि, न तु तेषाम् आतिथ्यम् । भवती मम रथम् आरुह्य मम नगरम् आगच्छतु । भवतीं परिणीय अहं सुखसागरे निमज्जयिष्यामि । राज्यभ्रष्टानां पाण्डवानाम् अनुसरणेन किं वा प्रयोजनम् ? मया सह आगत्य महाराज्ञीपदम् अलङ्करोतु भवती'' इति उक्तवान् सैन्धवः ।

एतत् श्रुतवती द्रौपदी महान्तं कोपं प्राप्तवती । तथापि 'यावत् पतयः न प्रत्यागच्छन्ति तावत् जागरूकतया व्यवहरणीयम्' इति निश्चित्य - ''अये ! कीदृशी बुद्धिहीनता भवतः ? मम पतयः सामर्थ्येन देवेन्द्रम् अपि अतिशेरते । तेषां कोपस्य पात्रता येन प्राप्यते सः निश्चयेन विपदम् अनुभवति'' इति बोधितवती ।

''पाञ्चालि ! पाण्डवानां विषये अस्माभिः सर्वं ज्ञायते एव । लोके स्थितेषु सप्तदशसु श्रेष्ठकुलेषु अस्माकं कुलम् अपि अन्यतमम् । अलं व्यर्थवार्तालापपूर्वकं समययापनेन । पाण्डवेभ्यः भीतः अहं भवतीम् अप्राप्य गच्छेयम् इति चिन्तनं मास्तु भवत्याः'' इति उक्तवान् सैन्धवः ।

तदा द्रौपदी कोपेन - ''अये राजाधम ! पाण्डवानां पत्नी सुलभलभ्या इति चिन्तनं वा भवतः ? अहं पतिव्रता अस्मि । पाण्डवेभ्यः ऋते अन्यत्र कुत्रापि मम मनः न प्रवर्तते । यदि भवान् बलात्कारप्रयत्नं कुर्यात् तर्हि अर्जुनस्य बाणाः भवन्तं यमसदनं प्रेषयेयुः'' इति उक्तवती ।



सैन्धवेन सह आगताः राजकुमाराः द्रौपदीं ग्रहीतुं गताः । द्रौपदी तेभ्यः आत्मानं रक्षन्ती उच्चैः आक्रोशनं कृतवती । सैन्धवः ताम् उन्नीय पलायनम् आरब्धवान् । द्रौपद्याः आक्रोशनं श्रुत्वा आगतः धौम्यः सैन्धवम् अनुसृत्य धावितवान् ।

सैन्धवः द्रौपदीं रथे आरोप्य ततः प्रस्थितवान् । तदा धौम्यः उच्चस्वरेण - ''सैन्धव ! किम् एतत् अनुचितं कृत्यं भवतः ? परस्त्रीहरणं किं क्षत्रियकार्यम् ? बाहुबले विश्वासः अस्ति चेत् युद्धे पाण्डवान् जित्वा कामं भवान् द्रौपदीं नयतु'' इति उक्तवान् । सैन्धवः धौम्यस्य वचनम् अशृण्वन् इव वेगेन रथं चालितवान् । धौम्यः रथम् अनुसृत्य धावितवान् ।

अत्रान्तरे पाण्डवाः मृगयां समाप्य आश्रमं प्रत्यागताः । तत्र तैः द्रौपदी कुत्रापि न दृष्टा । तेषां सारथिः इन्द्रसेनः रुदतीं धात्रेयिकां दृष्टवान् । 'सैन्धवः द्रौपदीं बलात् नीतवान्' इति वार्तां निवेदितवती धात्रेयिका । 'भवती मा रोदितु' इति धात्रेयिकाम् उक्त्वा धर्मराजः अनुजैः सह सैन्धवस्य ग्रहणार्थं प्रस्थितवान् । सैन्धवः यस्यां दिशि गतवान् तां दिशम् अनुसृतवन्तः ते पञ्च अपि । अनतिदूरे एव तैः आकाशे धूलिः दृष्टा । पुनः किञ्चित् अग्रे धावन् धौम्यमहर्षिः तैः दृष्टः । ''भवान् निश्चिन्ततया मन्दम् आगच्छतु'' इति तम् उक्त्वा ते अग्रे गतवन्तः । सैन्धवस्य रथे स्थितां द्रौपदीं दृष्टवतां तेषां कोपः प्रवृद्धः । ''अलम् अलं पलायनेन'' इति वदन्तः ते सैन्धवसैन्यस्य उपरि आक्रमणं कृतवन्तः । तेषां दर्शनात् एव भीताः सैन्धवपक्षीयाः पलायनं कृतवन्तः ।

तदा द्रौपदी सैन्धवम् उद्दिश्य - ''अये ! तत्र पश्यतु, मम पतयः आगच्छन्तः सन्ति । भवान् भवत्सैन्यं च इदानीं सर्वनाशं प्राप्स्यति । विनाशकाले विपरीतबुद्धिः उत्पद्यते इति ज्येष्ठाः वदन्ति । भवतः अपि तादृशी एव गतिः'' इति उक्तवती ।

पाण्डवाः सैन्धवसैन्यं लक्ष्यीकृत्य बाणवर्षणम् आरब्धवन्तः । एतत् दृष्ट्वा सैन्धवसैनिकाः पलायनम् आरब्धवन्तः । भीमः गदाम् उन्नीय सैन्धवरथसमीपं गतवान् । तदा कोटिकास्यः अभिमुखम् आगत्य तस्य अवरोधं कृतवान् । तस्य साहाय्यार्थम् अन्ये अपि तत्र आगताः ।

अर्जुनः सैन्धवरथस्य समीपं गच्छन् अवरोधभूतान् सप्तदश वीरान् मारितवान् । धर्मराजः अपि शताधिकान् मारितवान् । नकुलः बहून् पदातिनः मारितवान् । सहदेवः गजारूढान् सर्वान् यमसदनं प्रेषितवान् । त्रिगर्तराजः धर्मराजेन मारितः ।

सैन्धवपक्षीयाः बहवः मृताः । कोटिकास्यः पलायनमन्त्रं पठितवान् । अन्ते अनन्यगतिकः सैन्धवः द्रौपदीं रथे एव परित्यज्य पलायनम् आरब्धवान् । अर्जुनः एतं विषयं भीमम् उक्तवान् । तदा भीमः सैनिकानां मारणं परित्यज्य धर्मराजम् उद्दिश्य - ''अग्रज ! भवान् द्रौपदीं धौम्यं च रथे उपवेश्य आश्रमं प्रतिगच्छतु । अहम् अर्जुनः च अग्रे गत्वा सैन्धवं संहृत्य आगमिष्यावः'' इति उक्तवान् ।

''भीमसेन ! यद्यपि सैन्धवः घोरापराधं कृतवान्, तथापि सः न संहरणीयः । दुश्शला विधवा न भवेत् । गान्धारी शोकतप्ता न स्यात्'' इति सूचयित्वा धर्मराजः आश्रमं प्रत्यागतवान् ।

योजनदूरे एव भीमार्जुनाभ्यां सैन्धवः गृहीतः । तौ तस्य शिरः मुण्डयित्वा मृत्तिकालिप्तं कृत्वा रथे आरोप्य आनीय धर्मराजस्य पुरतः उपस्थापितवन्तः ।

''इतः परं भवान् सर्वत्रापि 'अहं पाण्डवानां दासः' इति वदन् जीवेत्'' इति सूचयित्वा द्रौपद्याः सूचनानुसारं सैन्धवं बन्धविमुक्तं कृतवान् भीमः ।

''इतः परम् एतादृशे अनुचिते कार्ये कदापि प्रवृत्तिः मा भवतु भवतः'' इति उपदिश्य तं प्रेषितवान् धर्मराजः ।

- (अनुवर्तते)



# र स वा र्ताः

## वृषभसंवत्सरः



चैनानिवासिनः पुराणेषु प्रख्यातानां प्राणिनां नाम्ना एव संवत्सरान् अपि निर्दिशन्ति । प्रतिसंवत्सरम् अपि प्राणिनामदानम् असाध्यम् । अतः द्वादशवर्षाणां कृते द्वादशप्राणिनां नामानि दत्तवन्तः सन्ति ते । द्वादशसंवत्सरात्मकस्य संवत्सरचक्रस्य समाप्तेः अनन्तरं तानि एव नामानि पुनरावृत्तानि भवन्ति । एवं तत्र गतफेब्रवरिमासस्य ८ दिनाङ्के वृषभसंवत्सरस्य आरम्भः अभवत् । एतस्मिन् नूतनसंवत्सरारम्भसमये बन्धुमित्रैः कृतं जनानां मेलनं, नूतनवस्त्रस्य धारणं, विशेषभोजन-विनोदादयः, सर्वत्र जनसमूहः, तत्कारणतः यातायातस्थगनम् इत्यादयः यथापूर्वं प्रवृत्ताः एव । आगामिजुलैमासे हाङ्काङ्गप्रदेशः ब्रिटन्देशेन चीनादेशाय दीयते । तस्मिन् हाङ्काङ्गप्रदेशे चीनासङ्गीतनाटकेषु प्रस्तुतानां पात्राणां शोभायात्रा प्रचलिष्यति । तस्यां शोभायात्रायां वृषभरूपेण निर्मितं बृहदाकारकं बेलून् अपि नेष्यते ।

## अतिदीर्घः चाकलेहः

स्वीडन्देशे जपानीये उपाहारगृहे फेब्रवरिमासस्य १७ दिनाङ्के १८२ मीटर्दीर्घः चाकलेहः उत्पादितः आसीत् । एतत् साहसकृत्यम् गिन्नीसपुस्तके योजनीयम् इति यावत् प्रयत्नः आरब्धः तावता ततोऽपि दीर्घस्य चाकलेहस्य निर्माणं कृतम् आसीत् स्विजर्ल्याण्ड्देशे । तस्य दैर्घ्यं २२१ मी. (७२५ पादपरिमितम्), विशालता ३ सें.मी. च आसीत् । पङ्क्तौ स्थापितानां फलकानाम् उपरि तस्य प्रदर्शनं कृतम् । गिन्नीसूसंस्थायाः अधिकारिणां दर्शनस्य अनन्तरं सः खण्डशः कर्तितः, ५०० चाकलेहप्रियेभ्यः दत्तः च ।



## सपट्टिकगर्दभाः

'बैगान्स्' विषये किं श्रुतवन्तः भवन्तः ? व्याघ्र-सिंहयोः मेलनेन जाताः व्याघ्रसिंहाः एते । इदानीं गर्दभ-जिब्रायोः मेलनेन मिश्रजातीयाः प्राणिनः उत्पादिताः सन्ति । ते एव सपट्टिकगर्दभाः इति उच्यन्ते । लण्डन्प्रदेशस्य लियोमिनिस्टर्सङ्ग्रहालये एतादृशं प्राणिद्वयं प्रेक्षकान् आकर्षयत् अस्ति । सुसिपोलार्ईवर्यः एतयोः कृते शिक्षणं यच्छन् अस्ति । एतयोः पादेषु एव पट्टिकाः दृश्यन्ते, न अन्येषु अङ्गेषु ।



अस्मद्देशीयानि सुन्दरस्थलानि

# राक्स्गार्डन्

लण्डन्नगरस्य 'क्यू गार्डन्स्' विरलसस्यानां विषये प्रसिद्धम् अस्ति । स्यानहटन्प्रदेशे विद्यमानं 'न्यूयार्क् सेण्ट्रल् पार्क्' विश्वे एव अतिबृहत् उद्यानम् इति प्रसिद्धमस्ति । सरोवरसहितस्य एतस्य विस्तीर्णं ७४० एकर्परिमितम् अस्ति । किन्तु चण्डीघडे विद्यमानं राक्गार्डन् उभाभ्याम् भिन्नम् एव अस्ति । एतत् २०,००० विविधाकाराभिः पाञ्चालिकाभिः युक्तं सुन्दरम् उद्यानम् अस्ति । एताः पाञ्चालिकाः प्राकृतिकशिल्पैः निष्प्रयोजकरज्जुभिः च निर्मिताः सन्ति । अतः एव एतत् शिलोद्यानम् इति कथ्यते । अत्र विद्यमानान् वक्र-सुन्दरमार्गान्, विचित्रसेतूः च दृष्ट्वा आगताः सर्वे नूतनान् अनुभवान् प्राप्नुवन्ति । भग्नकाचकखण्डैः निर्मिताः भल्लूकाः, अश्वाः, वानराः, मयूराः च अत्र सन्ति । एतस्य उद्यानस्य एकं सुन्दरम् आकारं दत्तवतः कलाविदः नाम अस्ति नेकचन्दः इति । सः 'पद्मश्रीः' इति उपधिना सत्कृतः अस्ति राष्ट्रपतिना । राजधान्यां विद्यामाने बालसङ्ग्रहालये (चिल्ड्रन्स् म्यूसियम्) एकम् अपूर्वम् उद्यानं निर्मातुं सर्वकारेण सः १९८५ तमे वर्षे प्रार्थितः । देशविदेशेभ्यः आगतानां यात्रिकाणां कृते चण्डीघडे विद्यमानं एतत् राक्गार्डन् एकं विशेषाकर्षणकेन्द्रं जातम् अस्ति ।



अस्मद्देशीयाः ऋषयः –

# शुकमहामुनिः

वेदान् विभक्तवतः, पञ्चमवेदत्वेन ख्यातं महाभारतं विरचितवतः च व्यासमहर्षेः पुत्रः एव तपोधनः शुकमहर्षिः ।

शुकः किञ्चित्कालं यावत् पितुः सकाशात् विद्याभ्यासं कृत्वा ततः देवगुरोः बृहस्पतेः शिष्यः जातः । विद्याभ्यासस्य समाप्तेः अनन्तरं व्यासस्य समीपम् आगत्य – ''मम विद्याभ्यासः समाप्तः अस्ति । वेद-वेदाङ्गादिकम् अधीतवान् अस्मि । निरन्तरं ध्यानं कुर्वन् सर्वसङ्गपरित्यागी सन् निर्विकारतया कालं यापयन् अस्मि । तथापि अहं सन्तृप्तः न अस्मि किमर्थम् एवम्?'' इति पृष्टवान् ।

''भवान् काञ्चित् परिणीय गृहस्थाश्रमी भवतु'' इति उक्तवान् व्यासमहर्षिः ।

''प्रपञ्चे जन्म प्राप्य काञ्चित् परिणीय कौटुम्बिकबन्धनात् अनेकान् क्लेशान् अनुभवन्तः मरणं प्राप्नुवन्ति सर्वे जीविनः । तादृशं सामान्यजीवनं मह्यं न रोचते'' इति उक्तवान् शुकः ।

तस्य वचनं श्रुत्वा किञ्चित्समयं यावत् मौनं स्थितवान् व्यासमुनिः । अनन्तरं सः उक्तवान् – ''पुत्र, भवान् एकवारं मिथिलां गत्वा जनकराजं दृष्ट्वा आगच्छतु'' इति ।

पितुः आज्ञानुसारं शुकः पादाभ्याम् एव मिथिलानगरं प्रति प्रस्थितवान् । 'जनक-महाराजः अत्युन्नतस्य अधिकारस्य उपयोगं कुर्वन्, सकलसौभाग्यानि अनुभवन्, सर्वदा परिचारकैः आवृतः भवति । तं द्रष्टुं किमर्थम् अहं पित्रा प्रेषितः ?' इति चिन्तयन् एव मिथिलां गतवान् सः । परन्तु जनकेन मेलनस्य अनन्तरं तत्रत्यां परिस्थितिं दृष्ट्वा सः ज्ञातवान् यत् एषः जनकः साधारणराजः न इति । 'राज्ञः कर्तव्यं पालयन् एव एषः संन्यासी इव व्यवहरन् सरोवरे स्थितं कमलपत्रम् इव निर्लिप्तः सन् कालं यापयन् कर्मयोगिजीवनं कुर्वन् अस्ति' इति शुकेन अवगतम् ।

सार्थकजीवनं कर्तुं जनकस्य जीवनमेव अनुकरणार्हम् इति ज्ञात्वा तृप्त्या पुनः पितुः समीपं गतवान् सः ।



## साल्मन्मीनः

नद्याः मधुरजलमयस्य ह्रदस्य मध्ये स्थितेषु गभीरगर्तेषु साल्मन्मीनाः जायन्ते ।



एतेषु ह्रदेषु वर्षद्वयं स्थित्वा अनन्तरम् उपरि आगत्य एते समुद्रं प्रविशन्ति । केषाञ्चन वर्षाणाम् अनन्तरं सन्तानस्य उत्पत्यर्थं ते पुनः जन्मस्थलमेव आगत्य अण्डानि प्रसुवते ।

## इन्द्रधनुः



### सुन्दरं पक्षिधाम

सिङ्गपुरे 'जुराङ्ग' पक्षिधाम्नि प्रायः ६००० जातीयाः पक्षिणः सन्ति । अशीतिलक्षसिङ्गपुर-डालर्परिमितं धनं व्ययीकृत्य एतस्य निर्माणं कृतम् अस्ति । अत्र पञ्चजातीयाः १६० पेङ्गिन्पक्षिणः, ६००० जातीयाः ८००० पक्षिणः च सन्ति । अत्र जलपक्षिणां कृते सरोवराणि, सस्यसमृद्धप्रदेशानां च निर्माणम् चापि कृतानि सन्ति । सुन्दरवृक्षाणां पालनम् अपि कृतम् अस्ति । पारावतः, हार्नबिल्पक्षी, जलकुक्कुटः (पेलिकान्) इत्यादिभिः क्रियमाणः 'आल् स्टार् बर्ड षो' इत्येतत् एतस्य जुराङ्गपक्षिधाम्नः विशेषता ।




# अत्याशा अयुक्ता

कालरुद्रस्य उत्तमा कृषिभूमिः आसीत् । दैवानुग्रहेण तत्प्रदेशे काले काले वृष्टिः भवति स्म । अतः कुटुम्बपोषणार्थं यावत् आवश्यकं ततोऽपि अधिकम् एव आयं प्राप्नोति स्म कालरुद्रः । तथापि तस्य जीवने तृप्तिः न आसीत् । 'मया महाधनिकत्वं प्राप्तव्यम्' इति प्रबला इच्छा आसीत् तस्य ।

कदाचित् तं ग्रामं प्रति कश्चन सिद्धपुरुषः आगतवान् । तस्य समीपं गत्वा कालरुद्रः पृष्टवान् - ''मानवेषु धनिक-दरिद्रभेदः किमर्थं भवति ?'' इति ।

''पूर्वजन्मनः कर्मणः फलस्य अनुगुणं भवति सर्वम् अपि । क्वचित् मानवस्य शक्तिसामर्थ्यादिकम् अपि अत्र कारणं भवति'' इति उक्तवान् सिद्धपुरुषः ।

''महाधनिकत्वं प्राप्तव्यम् इति मम महती इच्छा'' इति उक्तवान् कालरुद्रः ।

''तदर्थं भवान् वाणिज्यं करोतु'' इति सूचितवान् सिद्धपुरुषः । 'तत् मया न शक्यते' इति सूचितवान् कालरुद्रः । 'तर्हि कस्याञ्चित् कलायां निपुणः भवतु भवान्' इति उक्तवान् सिद्धपुरुषः । 'तदपि न शक्यते मया' इति उक्तवान् कालरुद्रः । ''महाजनान् शरणं गच्छतु'' इति सूचितवान् सिद्धपुरुषः । 'तदपि न शक्यते एव' इति उक्तवान् कालरुद्रः ।

''अशनवसनादिकं क्लेशं विना प्रचलति । दिनानि सुखेन गच्छन्ति सन्ति भवतः । एवं स्थिते अपि धनिकत्वं प्राप्तव्यम् इति इच्छा अयुक्ता एव'' इति तं बोधितवान् सिद्धपुरुषः ।

''धनिकत्वं प्राप्तव्यम् इति इच्छा मानवसहजा । सा अयुक्ता तु सर्वथा न । अदृष्टबलं स्यात् चेत् धनिकत्वं सिद्ध्येत्'' इति खेदमिश्रितस्वरेण उक्तवान् कालरुद्रः ।

''सामर्थ्याभावे सति प्राप्तम् अदृष्टकृतं सौभाग्यं चिरकालं न स्थास्यति । तथापि तादृशं सौभाग्यं प्राप्तव्यम् एव इति यदि भवतः प्रबला इच्छा अस्ति तर्हि अहम् एकं मन्त्रम् उपदिशामि । तस्य जपः कृतः चेत् भवतः पुरतः निधिदेवः प्रत्यक्षः भविष्यति । यावत् भवान् इच्छति तावत् धनं दातुम् अर्हति सः'' इति उक्तवान् सिद्धपुरुषः ।

एतत् श्रुत्वा नितरां सन्तुष्टः कालरुद्रः - ''एवं तर्हि तं मन्त्रं शीघ्रम् उपदिशतु कृपया'' इति प्रार्थितवान् ।

''मन्त्रोपदेशात् पूर्वं भवता निधिदेवस्य विषये किञ्चित् श्रोतव्यम् अस्ति । धनवतां सकाशे स्थितं धनम् अपनीय याचनाकर्त्रे ददाति सः । यः अन्याय्येन धनं सम्पादितवान् भवति तदीयम् एव धनम् अदृश्यीकृत्य अन्यस्मै ददाति सः । निधिदेवेन दत्तं धनं मासं यावत् अन्यस्य दृष्टिगोचरं न भवति । अतः एव स्वीकर्ता मासात् पूर्वं तस्य उपयोगं कर्तुं न अर्हति । एकस्य पुरतः निधिदेवः सकृत् एव दृष्टिगोचरः भवति, न तु बहुवारम् । अत्याशावान् ततः प्रयोजनं प्राप्तु न अर्हति प्रायः'' इति उक्तवान् सिद्धपुरुषः ।

सर्वस्य श्रवणानन्तरम् अपि कालरुद्रः पुनरपि प्रार्थितवान् यत् तं मन्त्रम् उपदिशतु कृपया इति । सिद्धपुरुषः मन्त्रोपदेशं कृत्वा - ''श्वः प्रातः स्नात्वा एतं मन्त्रं भवान् जपतु । तदा निधिदेवः भवतः पुरतः प्रत्यक्षः भविष्यति'' इति उक्तवान् ।

कालरुद्रः गृहं गतवान् । रात्रौ अल्पा अपि निद्रा तेन न प्राप्ता । अनन्तरदिने प्रातः



महता उत्साहेन स्नात्वा सिद्धपुरुषेण बोधितं मन्त्रम् उच्चारितवान् सः ।

अनन्तरक्षणे एव कृष्णकायः पुरुषः तस्य पुरतः प्रत्यक्षः जातः । सः गम्भीरस्वरेण कालरुद्रम् उक्तवान् - ''अहम् अस्मि निधिदेवः । भवान् यावत् धनम् इच्छति तावत् प्रार्थयतु तावत्'' इति ।

एतत् श्रुतवतः कालरुद्रस्य सन्तोषस्य पारम् एव न आसीत् । सः भक्त्या निधिदेवं नमस्कृत्य प्रार्थितवान् - ''मह्यं कोटिमितानि सुवर्णनाणकानि आवश्यकानि'' इति ।

''भवतु नाम । तावत् दास्यामि । तावत् धनम् अत्र भूमौ एव पातयामि, उत तदर्थं भवता पेटिकादिकं सज्जीकृतम् ?'' इति पृष्टवान् निधिदेवः ।

''देवाधिदेव ! मम गृहस्य प्राचीन-



प्रकोष्ठे एका महापेटिका अस्ति । सा च रिक्ता एव अस्ति । तस्यां भवान् धनं पातयतु'' इति निवेदितवान् कालरुद्रः ।

''अस्तु तर्हि । सूर्योदयानन्तरं तां पेटिकाम् उद्घाटयतु तावत्'' इति सूचयित्वा निधिदेवः अदृश्यतां गतः ।

सर्वं स्वप्ने प्रवृत्तम् इव भासते स्म । सूर्यकिरणानाम् उदयपर्यन्तं कालरुद्रः अस्वस्थचित्तः सन् गृहे इतस्ततः अटितवान् । सूर्योदयानन्तरं सः पेटिकाम् उद्घाटितवान् । तत्र धनराशिः एव आसीत् । 'एतावता धनेन अहं वैभवोपेतं जीवनं यापयितुं शक्नोमि' इति चिन्तयन् सः महान्तं सन्तोषम् अनुभूतवान् ।

अकस्मात् कालरुद्रः एतावन्तं सन्तोषं कथं प्राप्तवान् इति न ज्ञातवन्तः तस्य मातापितरौ पत्नी पुत्रः वा । 'यत् धनं केवलेन मया दृश्यते तस्य विषये इदानीम् एव मया कुत्रापि न वक्तव्यम् । मासानन्तरं सर्वान् वदिष्यामि' इति चिन्तयन् कालरुद्रः सन्तोषस्य कारणं कमपि न उक्तवान् ।

प्रतिदिनं सः प्रकोष्ठं प्रविश्य पेटिकास्थं धनं दृष्ट्वा दृष्ट्वा सन्तोषम् अनुभवति स्म । एवम् एव सप्ताहद्वयम् अतीतम् । अथ एकदा पेटिकास्थं धनम् अदृश्यं जातम् ।

एतस्मात् कालरुद्रस्य हृदयं स्तब्धम् इव । एतत् धनं मत्तः ऋते अन्येन केनापि नैव दृष्टम् । तथापि एतत् कथम् अदृश्यतां गतम् ? सः सिद्धपुरुषः एव किमपि कृतवान् स्यात् । अतः एतद्विषये सः एव प्रष्टव्यः' इति चिन्तयित्वा कालरुद्रः सिद्धपुरुषस्य समीपं गन्तुम् उद्युक्तः । अत्रान्तरे तेन ज्ञातं यत् सप्ताहात् पूर्वम् एव सः सिद्धपुरुषः एतं ग्रामं परित्यज्य मधुरापुरं गतवान् अस्ति इति । अतः कालरुद्रः मधुरापुरं प्रति एव प्रस्थितवान् । यावत् सः मधुरापुरसमीपम् आगतवान् तावता रङ्गराजः तस्य अभिमुखम् आगत्य - ''अये, निध्यञ्जनौषधीमूलं खनता निधिः यथा प्राप्तः तथा भवन्तं द्रष्टुं प्रस्थितस्य मम पुरतः भवान् एव उपस्थितः खलु ! सौभाग्यकरम् एतत् । भवन्तं द्रष्टुम् एव अहं प्रस्थितवान् आसम्'' इति उक्तवान् ।

''मत्सकाशे किं कार्यं भवतः ?'' इति पृष्टवान् कालरुद्रः ।

''सर्वं विस्मृतं वा भवता ? मम पुत्री भवतः पुत्राय दातव्या इति प्रस्तावः यदा कृतः तदा भवान् वरदक्षिणारूपेण

पञ्चाशत्सहस्त्रं सुवर्णनाणकानि अपेक्षितवान् आसीत् । तदा मत्समीपे तावत् धनं न आसीत् । किन्तु इदानीं लक्षं सुवर्णनाणकानि दातुम् अपि सामर्थ्यम् आगतम् अस्ति मम । एतं विषयं भवन्तम् उक्त्वा विवाहसम्बन्धं दृढीकृत्य गच्छाम इति विचिन्त्य अहं भवद्गृहं प्रति प्रस्थितः आसम् । अन्ये वराः मया न प्राप्येरन् इति मा चिन्तयतु भवान् । पूर्वं प्रस्तावः कृतः आसीत् इत्यतः अहं भवत्समीपम् आगन्तुम् उद्युक्तः आसम्'' इति उक्तवान् रङ्गराजः ।

''एतावत् धनं कथं प्राप्तं भवता ?'' इति आश्चर्येण पृष्टवान् कालरुद्रः ।

''सर्वं सिद्धपुरुषस्य दयया सम्पन्नम्'' इति उक्तवान् रङ्गराजः ।

''आवां विवाहप्रस्तावविषये अनन्तरं वार्तालापं करवाव तावत् । मया त्वरया सः सिद्धपुरुषः द्रष्टव्यः'' इति उक्तवान् कालरुद्रः ।

ततः रङ्गराजः कालरुद्रं सिद्धपुरषस्य समीपं नीतवान् । तावता सिद्धपुरुषः तम् अपि ग्रामं परित्यज्य अन्यं ग्रामं गन्तुं सन्नाहं कुर्वन् आसीत् । कालरुद्रस्य मुखात् प्रवृत्तं सर्वं श्रुत्वा सः उक्तवान् - ''अत्याशा न लाभाय इति मया उक्तम् आसीत् । तथापि भवता तत् न अवधारितम् । अतः निधिदेवात् प्रयोजनं प्राप्तुं न शक्तम्'' इति ।

''वस्तुतः किं वा प्रवृत्तम् अत्र ?'' इति कुतूहलेन भक्त्या च पृष्टवान् कालरुद्रः ।

''कोटिपरिमितानि सुवर्णनाणकानि यदा प्राप्तानि तदा भवान् महापुरुषः संवृत्तः । वस्तुतः तु तत् धनं भवता न्याय्येन मार्गेण स्वपरिश्रमेण सम्पादितः न आसीत् खलु ? अतः, यदा अन्यः कोटिमितं धनं प्रार्थितवान् तदा भवत्समीपस्थं धनं निधिदेवेन अदृश्यीकृत्य अन्यस्मै दत्तम् ।



यदि भवान् दशसहस्त्रं विंशतिसहस्त्रं वा याचितवान् स्यात् तर्हि तत् धनं निधिदेवस्य स्मृतिपथे न अस्थास्यत् । अथवा अन्यः कोटिसुवर्ण-नाणकानि यदि प्रार्थितवान् न स्यात् तर्हि अपि तावत् धनं भवत्समीपे अवशिष्टम् अभविष्यत् । किन्तु एतस्मिन् काले अत्याशावन्तः सन्ति अनेके । अतः बहवः कोटिमितम् एव धनं याचन्ते तं निधिदेवम् । तत्कारणतः कोटिमितं तत् धनं पुनः पुनः स्थानपरिवर्तनं कुर्वत् भवति'' इति मन्दहासपूर्वकम् उक्तवान् सिद्धपुरुषः ।

एतत् श्रुत्वा म्लानतां प्राप्नुवन् रङ्गराजः - ''हा हन्त ! मया अपि कोटिमितानि सुवर्णनाणकानि एव प्रार्थितानि आसन् । न ज्ञायते तस्य धनस्य का गतिः जाता इति'' इति वदन् वेगेन स्वगृहं गतवान् ।

''एतावता तत् अन्यत्र गतं स्यात् । अन्यथा सप्ताहाभ्यान्तरे वा गच्छेत्'' इति उक्त्वा सिद्धपुरुषः अन्यं ग्रामं गतवान् ।

रङ्गराजस्य का गतिः स्यात् इति द्रष्टुं कालरुद्रः यावत् रङ्गराजस्य गृहं गतवान् तावता रङ्गराजः उद्घाटितायाः पेटिकायाः पुरतः उपविश्य हस्तद्वयेन शिरः गृहीत्वा दिग्भ्रान्त्या आकाशं पश्यन् आसीत् । यत् प्रवृत्तं तत् अवगच्छन् कालरुद्रः - ''मित्र ! अलं चिन्तया । आवयोः जीवने सौभाग्यं सकृत् दृष्टिगोचरं सत् अदृश्यताम् अगच्छत् । अत्याशा अयुक्ता इति सिद्धपुरुषः बोधितवान् आसीत् चेदपि आवां अत्याशां कृतवन्तौ यत् तस्य फलम् एतत्'' इति वदन् रङ्गराजस्य सान्त्वनं कृतवान् ।

''भवता यावत् इष्यते तावतीं वरदक्षिणां दत्त्वा भवतः पुत्राय मम पुत्री दातव्या इति सङ्कल्पितम् आसीत् मया । किन्तु सर्वं धूलिसाज्जातम्'' इति वदन् अश्रूणि पातितवान् रङ्गराजः ।

''मित्र ! अत्याशाकारणतः हानिं प्राप्तवन्तौ आवां समानदुःखिनौ । मम पुत्रः जामातृत्वेन प्राप्तव्यः इति खलु आसीत् भवतः इच्छा ? ताम् अहं पूरयिष्यामि । वरदक्षिणां किञ्चिदपि अस्वीकृत्य एव भवतः पुत्रीं स्नुषात्वेन स्वीकरिष्यामि । अतः अलं खेदेन'' इति उक्तवान् कालरुद्रः ।

एतत् श्रुत्वा रङ्गराजः तावन्तं सन्तोषं प्राप्तवान्, यावान् सन्तोषः निधिप्राप्तितः भवेत् ।





# महाबलशालिनौ

कस्यचित् वनस्य समीपं शरभेन्द्रनामकः कश्चित् बलशाली आसीत् । 'प्रपञ्चे एव मत्तः अपि अधिकबलशाली नास्ति' इति तस्य भावना आसीत् । यतः सः प्रतिदिनं वनं गत्वा काष्ठस्य महान्तं बन्धमेव आनयति स्म । सः बन्धः सामान्यबन्धस्य दशगुणित-भारयुक्तः भवति स्म । तावद्भारयुक्तं भारबन्धम् गृहम् आनीय पत्नीं वदति स्म - ''अहं कलियुगस्य भीमः अस्मि । पश्यतु, कियत् बृहत् बन्धम् आनीतवान् अस्मि'' इति ।

''भीमकायः भवान् बलशाली स्यात् एव । कः न इति वदति ? परन्तु भवान् महाबलसदृशः तु न'' इति वदति स्म शरभेन्द्रस्य पत्नी दुर्गावती ।

तदा शरभेन्द्रः कोपेन - ''वचनेन किं प्रयोजनम् ? मम अपेक्षया अधिक-बलशालिनं तं दर्शयतु । तदा विश्वसिमि'' इति वदति स्म ।

एकस्मिन् दिने दुर्गावती घटं शिरसि संस्थाप्य जलम् आनेतुं कूपं गतवती । यदा सा कूपात् पात्रम् उद्धर्तुं प्रयत्नं कृतवती तदा भारात् तत् उपरि एव न आगतम् । सा बहु प्रयत्नं कृतवती । अन्ते अपि घटम् उपरि आनेतुम् अशक्नुवती सा खेदेन रज्जुं तत्रैव संस्थाप्य रिक्तघटमेव स्वीकृत्य गृहं प्रति प्रस्थितवती । प्रतिगमनसमये वनमार्गे अन्यस्याः दिशः काचित् महिला लघुशिशुम् उन्नीय रिक्तघटं स्वीकृत्य जलार्थम् आगच्छन्ती आसीत् । सा दुर्गावतीं दृष्ट्वा - ''किमर्थं रिक्तघटं गृहीत्वा प्रत्यागच्छन्ती अस्ति भवती ? कूपः शुष्कः जातः किम् ?'' इति पृष्टवती ।

''तथा न । कूपतः पात्रमेव बहिः न आगच्छति । प्रायशः दश जनाः बलात्

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

रज्जुम् आकर्षन्ति चेत् अपि तत् जलपात्रम् उपरि न आगच्छति इति मन्ये । कूपे कोऽपि पिशाचः अस्ति इति भाति मम'' इति उक्तवती दुर्गावती ।

''तावदेव किल ? मया सह आगच्छतु । भवती यावत् इच्छति तावत् जलं उद्धृत्य ददामि'' इति उक्तवती सा महिला । दुर्गावती संशयेन एव तया सह गतवती । यदा कूपः प्राप्तः तदा दुर्गावती उक्तवती - ''अहं महता कष्टेन अपि जलम् उद्धर्तुमेव अशक्ता जाता । भवत्या कथं शक्येत ?'' इति । ततः सा रज्जुं गृहीत्वा पुनरपि प्रयत्नं कर्तुम् उद्युक्ता अभवत् ।

तावति काले महिलायाः कटौ उपविष्टः बालकः दुर्गावत्याः हस्ते स्थितां रज्जुं गृहीत्वा विनायासं पात्रम् उद्धृतवान् । दुर्गावती एतत् दृष्ट्वा दिग्भ्रान्ता अभवत् ।

बालकस्य साहाय्येन उभे अपि महिले सम्यक् स्नात्वा वस्त्राणि प्रक्षाल्य स्वघटं जलेन पूरितवत्यौ ।

मार्गे दुर्गावती तस्याः महिलायाः विषयान् सर्वान् सङ्गृहीतवती । ''एतस्मिन् मार्गे एव मम गृहम् अस्ति । मम पत्युः नाम महाबलः इति'' इति उक्त्वा महिला पुत्रेण सह गतवती ।

दुर्गावती गृहम् आगत्य प्रवृत्तं सर्वम् अपि पतिम् उक्तवती ।

''एतस्मिन् प्रदेशे महाबलः अन्यः अस्ति वा ? कुत्र तिष्ठति सः ? तम् इदानीम् एव संहरिष्यामि'' इति उक्तवान् शरभेन्द्रः ।

''तस्य सहवासः सर्वथा मास्तु । सः यदि भवन्तं मारयेत् तर्हि मम गतिः का भवेत् ? तस्य शिशुः एव यदि तावद्बलशाली अस्ति तर्हि तस्य शक्तिः कियती स्यात् !'' इति आतङ्कमिश्रितेन-स्वरेण उक्तवती दुर्गावती ।



शरभेन्द्रः पत्न्याः वचनम् उपेक्षमाणः "श्वः प्रातः तस्य गृहस्य मार्गं दर्शयतु । अग्रिमं यथोचितम् अहं करिष्यामि" इति उक्तवान् ।

अनन्तरदिने सः शरं धनुः खड्गादिकं च स्वीकृत्य पत्न्या सह प्रस्थितवान् । महाबलस्य गृहगमनात् पूर्वं कूपस्य विषये ज्ञातुम् इच्छन् सः कूपस्य समीपं गतवान् । तस्मिन् समये एव महाबलस्य पत्नी अपि तत्र आगतवती ।

शरभेन्द्रः तस्याः हस्तात् पात्रं स्वीकृत्य कूपस्य अन्तः प्रेषयित्वा - "एतत् लघुपात्रम् उद्धर्तुं दश जनाः आवश्यकाः किम् ?" इति वदन् पात्रम् उद्धर्तुं प्रयत्नं कृतवान् । महता प्रयत्नेन पात्रं किञ्चित् उपरि आनीतवान् सः । परन्तु पात्रस्य भारः अधिकः आसीत् इत्यतः शरभेन्द्रः एव आकृष्टः जातः । यदि तस्मिन् क्षणे बालकः शरभेन्द्रं न अग्रहीष्यत् तर्हि शरभेन्द्रः कूपे अपतिष्यत् ।

अनन्तरं सः बालः शरभेन्द्रस्य हस्तात् रज्जुं स्वीकृत्य विनायासं पात्रम् उद्धृतवान् ।

"इदानीं वा विषयं ज्ञातवान् किल भवान् ? तूष्णीं गृहं गच्छतु" इति पतिम् उक्तवती दुर्गावती ।

"अस्मिन् व्यवहारे किमपि इन्द्रजालम् अस्ति । अहं महाबलेन मिलित्वा सर्वं प्रत्यक्षं दृष्ट्वा एव प्रत्यागमिष्यामि" इति उक्तवान् शरभेन्द्रः ।

"भवतः ललाटे यत् लिखितं तत् मया परिवर्तयितुं शक्यते किम् ? अहं तु भवता सह न आगमिष्यामि" इति वदन्ती गृहं प्रति प्रस्थितवती दुर्गावती ।

सा महिला शरभेन्द्रम् उद्दिश्य - "मम वचनं शृणोतु । भवान् अपि स्वस्य गृहं प्रति गच्छतु । मम पत्युः पुरतः आगमनं तावत् उत्तमं न" इति उक्तवती ।





कम्पितानि । शरभेन्द्रः यस्मिन् पात्रे आसीत् तत् अपि कम्पितम् । तदा शरभेन्द्रः बहु भीतः जातः । एषः महाबलः मम अपेक्षया बलशाली इति तेन ज्ञातम् ।

महाबलस्य पत्नी उक्तवती - "गजः सिद्धः अस्ति । खादितुम् आगच्छतु" इति ।

"किञ्चित् तिष्ठतु । कुतश्चित् मनुष्यस्य गन्धः आगच्छति । मनुष्यमांसं खादितवतः मम बहूनि दिनानि अतीतानि" इति वदन् महाबलः गृहं परितः अन्वेषणं कृतवान् ।

यदा महाबलः दूरं गतवान् तदा तस्य पत्नी शरभेन्द्रस्य समीपं गत्वा - "मम पतिः भोजनानन्तरं निद्राति । तदा अहं दीपं वातायने स्थापयामि । इतः भवतः निर्गमनार्थं सा एव सूचना । यदा सूचना प्राप्यते तदा अविलम्बेन निर्गच्छतु भवान् । पुनः कदापि अस्मिन् पार्श्वे पदम् अपि मा स्थापयतु" इति सूचितवती ।

"कदापि न आगमिष्यामि मातः । मया एतावता एव विवेकः प्राप्तः अस्ति" इति उक्तवान् शरभेन्द्रः ।

रात्रौ कदाचित् वातायने दीपः दृष्टः । शरभेन्द्रः मन्दगत्या पात्रात् बहिः आगत्य वेगेन ततः धावितवान् ।

यावत् सः किञ्चिद्दूरं गतवान् तावता महान् चण्डमारुतः आगतः । "मनुष्यस्य गन्धः । मनुष्यस्य गन्धः" इति वचनानि श्रुतानि । 'एषः महाबलस्य स्वरः एव' इति अवगच्छन् शरभेन्द्रः धावनस्य वेगं यावच्छक्ति वर्धितवान् ।

शरभेन्द्रस्य पृष्ठतः एव महाबलः अनुधावन् आगतवान् । चण्डमारुतः तु

तथापि शरभेन्द्रः एतत् अनङ्गीकुर्वन् तस्याः गृहपर्यन्तं गतवान् ।

"मम पतिः मृगयार्थं गतवान् अस्ति । एकवारम् एकं गजमेव सः खादति । अतः भवान् कुत्रापि निलीय ततः एव तं पश्यतु । पुरतः यदि गच्छति तर्हि भवन्तम् एव खादेत् सः" इति उक्तवती महाबलस्य पत्नी । सा तम् एकस्मिन् महति पात्रे उपवेशितवती । तस्मिन् शरभेन्द्रः पादस्य अङ्गुलीनाम् आधारेण तिष्ठति चेत् एव बहिः प्रवर्तमानं द्रष्टुं शक्नोति स्म ।

सायङ्काले महान् चण्डमारुतः उद्भूतः । महाबलः गृहस्य अङ्गणम् आगत्य - "अये, गजं पक्ववती किम् ?" इति उच्चस्वरेण पृष्टवान् । तस्य स्वरस्य उच्चतायाः कारणतः तत्र स्थितानि वस्तूनि सर्वाणि

अनुवर्तमानः एव अस्ति । शरभेन्द्रस्य पादयोः शक्तिः यद्यपि नष्टा आसीत् तथापि सः वायुकारणतः अग्रे गच्छन् अस्ति । सः अरण्याभिमुखं धावन् आसीत् इति कारणतः बहु दूरं गतं चेत् अपि जनसञ्चारः न दृष्टः एव ।

अत्रान्तरे शरभेन्द्रेण किञ्चित् विचित्रं दृश्यं दृष्टम् । तस्य प्राणाः गताः इव । अरण्यमध्ये कश्चित् महाकायः वन्यप्राणिनः सर्वान् एकत्रीकृत्य तान् छित्त्वा खादन् अस्थीनि क्षिपन् आसीत् ।

''कः भवान् ? कः भवतः पृष्ठतः अनुधावन् अस्ति ?'' इति सः महाकायः शरभेन्द्रं पृष्टवान् ।

''कश्चित् महाबलः'' इति उक्तवान् शरभेन्द्रः कम्पमानस्वरेण ।

महाकायः कोपेन गर्जन् - ''वनस्य राक्षसः सन् अहम् अत्र अस्मि । एवं स्थिते अन्यः महाबलः कथं स्यात् लोके ? आगच्छतु नाम सः । तस्य प्राणान् अपहरामि'' इति उक्तवान् ।

तस्मिन् समये महाबलः समीपम् आगतवान् । तेन सह आगतेन चण्डमारुतेन शरभेन्द्रः उपरि क्षिप्तः । तेन कारणेन सः कस्याञ्चित् शाखायां लम्बमानः अतिष्ठत् । ततः एव सः महाबल-महाकाययोः मध्ये प्रचलितं युद्धं दृष्टवान् ।

तौ अभिमुखं स्थित्वा किञ्चित्कालं परस्परं दृष्टवन्तौ । अनन्तरं तयोः युद्धम् आरब्धम् । तयोः ताडनाक्रोशादिभिः शैलाः अपि भग्नाः जाताः ।

प्रातःपर्यन्तं उभौ अपि एवमेव युद्धं कुर्वन्तौ युगपत् आकाशं प्रति उड्डीय मेघेषु अदृश्यौ जातौ । परन्तु तदा तदा गर्जन-ताडनादयः शब्दः तु श्रूयन्ते स्म ।

तयोः कस्य जयः अभवत् इति द्रष्टव्यम् इति बहुकालपर्यन्तं शरभेन्द्रः निरीक्षमाणः आसीत् । परन्तु तौ द्वौ भूमिं न अवतीर्णवन्तौ एव । अन्ते सः वृक्षात् अवतीर्य मार्गम् अन्विष्यन् गृहं गतवान् ।

एतस्य प्रकरणस्य अनन्तरं कदापि शरभेन्द्रः स्वशक्तेः विषये पत्न्याः, अन्यस्य कस्यापि पुरतः वा न उक्तवान् एव । तस्मिन् प्रान्ते अद्यापि यदा मेघगर्जनं भवति तदा ''महाबलौ युद्धं कुरुतः एव स्तः'' इति वदन्ति जनाः ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां अगस्ट् - १९९७ मासे प्रकटयिष्यामः ।



K. SUBRAHMANYAM



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - घटं मृत्तिकया निर्मातुं मार्गः अयम् .. ।

द्वितीयचित्रम् - घटेन जलं वहन्ती मार्गे इयम् .. ।।

प्रेषिका - एस् रेवती, ३/डि, शङ्करी इल्लम्, इय्यनार्कोविल्मार्गः, पेन्नुट्टि - ६०७ १०६ (त.ना.)

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras - 600 026 (India). Controlling Editor: NAGI REDDI.